॥ श्रीमल्लक्ष्मीवेङ्कटेशाभ्यां नमः ॥

# श्रीधरीया

लघुशब्देन्दुशेखरव्याख्या ।

ण्यग्रामस्थ पण्डितवरश्रीश्रीधरशर्मविर

जनोपकाराय प्रवृत्तैर्ल० व्य० से० प्र

द्राविडवीरेश्वरशास्त्रिणा

संशोध्य

श्रीकाश्यां

"राजराजेश्वरी" नाम्नि मुद्रायन्त्राल

मुद्रयित्वा प्रकाशं नीता

संवत् १९४५

॥ शुभंभवतु ॥

त्यस्य पुनर्मुद्रणादिविषये सर्वथा स

प्रभृतीनामेवाधिकारः ।

सुरासुरासेवितपादपङ्कजा
करे विराजत्कमनीयपुस्तका ।
विधेश्च पत्नी कमलासनप्रिया
सरस्वती नृत्यतु वाचि मे सदा ॥ १ ॥



॥ श्रीः ॥

# श्रीधरी

## श्रीधरविरचिता लघुशब्देन्दुशेखरव्याख्या ॥

### ॥ श्रीगणेशाय नमः ॥

॥ श्रीमल्लक्ष्मीव्यङ्कटेशाभ्यां नमः ॥

दक्षिणे लक्ष्मणो यस्य वामे तु जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वन्दे रघुनन्दनम् ॥ १ ॥

पातञ्जलेइति । पतञ्जलिना निर्वृत्ते योगशास्त्रे इत्यर्थः । महाभाष्ये इति । महाभाष्येचेत्यर्थः । समुचितऋषित्रयेति । व्याकरणे सम्यगुचितपाणिनिकात्यायनपतञ्जलिरूपऋषित्रयेत्यर्थः । ननु"सञ्ज्ञा च परिभाषाचे" त्यभियुक्तोक्तसूत्रलक्षणेऽइउणित्यादीनां सूत्रत्वव्यवहारो न स्यात्तेषां क्रमबोधकत्वादित्यत आह । एषामिति । वृत्तिपरिच्छेदकत्वेनेति । शक्त्युद्बोधकत्वेनेत्यर्थः । इत्सञ्ज्ञेनेति । उपदिश्यते ऽनेनेति करणव्युत्पत्तिरित्सञ्ज्ञायामुपदेशशब्दस्येति स्वमते इत्सञ्ज्ञायाः प्राप्तावपि उच्चारणसामर्थ्याल्लोपाभावे कल्पनीये प्रधानशास्त्रबाधकल्पनापेक्षया तदुपयोगिनीत्सञ्ज्ञैव बाध्यत इत्याशयेनैवमुक्तिरिति भावः । स्वौजसित्यादीनामपीति । आदिना तिप्तस्, संख्याया अवयवे इत्यादीनां संग्रहः । सुबादीति । अत्रादिना तिङ्मात्रजादीनां संग्रहः । अविवक्षयेति । वाक्ये तु सा विवक्षामपेक्षते इत्यंशस्यान्योपलक्षणत्वात्प्रत्येकम्पदत्वेन सुबन्तचयरूपवाक्यत्वाद्वेत्यर्थः । अनुकरणत्वेनेति । अभेदविवक्षयार्थवत्त्वाभावेन प्रातिपदिकत्वाभावादिति भावः । ननु वृत्त्युपस्थितस्यैव शाब्दे

ऽन्वयप्रतियोगित्वादनुकरणे सर्वत्र भेदविवक्षैव युक्तेत्यत आह । सौत्रत्वाच्चेति । सौत्रत्वा "छन्दोवत्सूत्राणी" त्यतिदेशा " त्सुपांसुलुगि " तिलुगिति भावः । न विभक्तयुत्पत्तिरिति । लुग्यपि लुकानुत्पत्तिरेवान्वाख्यायते इति भावः । विरुध्येतेति । शक्तिरित्यादिः । यतस्सन्धिकार्य्ये कृते विकृतरूपस्य श्रवणम्भविष्यत्यतो गृहीता शक्तिर्विरुध्येतेति भावः । तद्विरोधाभावादिति । गृहीतशक्तिनाशाभावादित्यर्थः । न चाविकृतरूपाकाराश्रयशक्तिस्तद्रूपनाशकसान्धिकार्य्यस्यानिमित्तमित्यस्त्येवोपजीव्यविरोध इति वाच्यम् । एवं सत्याद् गुणइत्यादीनां वैयर्थ्यं स्यात् । सन्देह इति । किं ह्रस्वस्यायन्निर्द्देश उत दीर्घस्यायमित्येवं सन्देह इत्यर्थः । व्याख्यानतइति । अणुदिदिकोयणिति एचोऽयवायावस्ताभ्यामैजितिनिर्द्देशरूपाद्व्यत्यक इति प्रकृति भावरूपाच्चेत्यर्थः । अस्यैववेदाङ्गत्वमिति । पाणिनिव्याकरणस्यैववेदाङ्गत्वमित्यर्थः । अत्रेति । चतुर्द्दशसूत्र्यावेदत्वे महेश्वरात्पाणिनेर्लाभेचेत्यर्थः । नन्वेवं लण्सूत्रस्थभाष्यासङ्गतिस्तस्मात्त्वेतस्याः पाणिनिकर्तृत्वं सादित्वञ्च प्रतीयत इत्यत आह । आचार्य्यपदेन महेश्वरः अनुबन्धाश्चमहेश्वरकृताएवेति । ननु महेश्वरेण कृतत्रमङ्णनमित्यत्र मकारस्य भाष्ये प्रत्याख्यानमसङ्गतमतआह । सर्वत्रेति । अत्रार्थे भाष्यसम्मतिमाह । तदुक्तमिति । नन्वेवमपि तत्तत्प्रत्याख्यानासङ्गतिर्वृद्धिसूत्रस्थभाष्यविरोधाच्चेत आह । सूत्रस्थेति । अतएव । चतुर्द्दशसूत्र्यावेदत्वादेवेत्यर्थः । ननादेति । नादयामासेत्यर्थः । नवपञ्चवारमिति । नवाधिकाः पञ्च नवपञ्च नवपञ्चानां वाराणांसमाहारो नवपञ्चवारम् । ननादेत्येतद्योगे कालाध्वनोरत्यन्तसंयोग इति द्वितीया । विमर्शेइति । विचारे कृते सतीत्यर्थः । अन्त्यवर्णचतुर्द्दशमिति । चत्वारश्च दश च चतुर्द्दश अन्त्यवर्णश्चचतुर्द्दश च अन्त्यवर्णचतुर्दश इति विद्यते यास्मिन्कदम्बे तदन्त्यवर्णचतुर्द्दशमिति । अर्शआद्यजन्तामितिभावः । अतएव । अइउणित्यादीनां वेदत्वादेवानुबन्धानां सादित्वादेव चेत्यर्थः । अतएव । पूर्वोक्तस्य वेदत्वादेवेत्यर्थः । एतच्चोपपादितमिति । एकवाक्यता चादिरकारादिरित्यादिनेत्यर्थः । ननु लेत्यत्र लकारोच्चारणन्तु रप्रत्याहारानित्यत्वे एव ज्ञापकमस्तु तत्फलं रदाभ्यामित्यादावित्यत आह । किञ्चेति । बहुष्विति । इकोयणचि, संयोगादेरातोधातोर्यण्वत, ओःपुयण्ज्यपरे, उदात्तस्वरितयोर्यण इत्यादिष्वित्यर्थः । ननु यण्घटितसूत्रेष्वर्द्धमात्रागौरवेणाकारेण रप्रत्याहार एव नान्येन इति ज्ञाप्यते । तेनङ्य्य्र्यः, योचि, अयोपधादित्या-

दौ न प्रत्याहार इति न दोषोत आह । किञ्चेति । अव्यापकत्वापत्तिरिति । पक्षतावच्छेदकावच्छिन्नवृत्तित्वरूपव्यापकत्वाभावापत्तिरित्यर्थः । जातिपक्षस्यैवेति । अतएवावात्तामित्यादिसिद्धिरिति भावः । व्यक्तिपक्षे तु मामाँस्त्रायस्वेत्यत्र न दोषो ऽणुदित्सूत्रज्ञाप्यलक्ष्यतावच्छेदकज्ञानोत्तरमकारस्य स्ववाच्यवाच्ये लक्षणायास्सत्त्वेनाणुदित्सूत्रस्य चाण्सञ्ज्ञासापेक्षत्वेनान्तरङ्गत्वात्प्रागेवाकारस्येत्सञ्ज्ञालोपाभ्यामपहारात् । नचेत्सञ्ज्ञायामपि तथा ज्ञानावलम्बापेक्षा गुणा अभेदका इत्येवगतार्थत्वात् । अनुनासिकपक्षइति । अनुनासिकत्वसमानाधिकरणाकारत्वजातिर्निर्दिश्यत इति मतेनेदम् । वस्तुतो व्याप्यजातिनिर्देशे प्रमाणाभावादत्र पक्षे व्यक्तिपक्षे च दूषणमाह । सोस्तीत्यादाविति । आदिना जातिपक्षे समाधानं देवा यान्ति शय्यासामित्यादीनां, व्यक्तिपक्षे समस्यतेदेवा यत्र शय्यासामित्यादीनां संग्रहः । सुलोपाद्यापत्तिश्चेत्ति । आदिना मोनुस्वारः; हल्ङ्यिसर्वेषां, हलोयमांयमिलोप इत्यनुस्वार, लोपादीनां संग्रहोबोध्यः । सः इत्येतन्मात्रे हल्ङ्यादिलोपप्राप्तेरस्तीतिव्यर्थमिति न वाच्यम् । एतत्तदोरित्यारम्भा " त्सकृद्गतिन्यायस्यै " वाश्रयणात् । अतएव । लणित्यकारस्या ऽनुनासिकत्वाभावादेव । प्रसङ्गाद् द्वितीयहेतुमुपपादयति । तत्रप्रधान्यमित्यादिना । द्वितीयहेतोरव्यापकत्वं शङ्कते । नचेत्यादिना । समाधत्ते । हकारादिष्विति । पुनः पुनरकारोच्चारणेनेत्यर्थः । शक्यत्वादिति । प्रत्येक मकारोच्चारणेनोच्चारणार्थं वर्णराहित्यमेवा ऽप्राधान्यं हल्सु ज्ञाप्यत इति भावः । ननु हकारादिष्वकारोच्चारणस्य किम्प्रयोजनमत आह । नपुनरिति । नन्वेवमप्युच्चारणार्थङ्कृतस्यापि हल्सञ्ज्ञाकारस्यकुतोनात आह । एषाहीति । इति भावइति । अनुवाद्येषूच्चारणार्थवर्णघटितसमुदायस्य तद्रहिते लक्षणा । उच्चारणार्थानामपि इत्सञ्ज्ञालोपाभ्यामेवनिवृत्तिरिति तु विधेयविषय एवेति तत्त्वम् । एतेन रप्रत्याहाररखण्डनपरेण पूर्वग्रन्थेन दिवऔत्सूत्रस्थेनोत्तरग्रन्थेन च विरोधादसङ्गतमिदमित्यपास्तम् । सार्थक्यायेति । अन्यथा हल्सूत्रस्यान्त्यमिदित्येवार्थो हलन्त्यमित्यस्य स्यादिति भावः । आवृत्त्येति । उद्देश्यविधेयभावार्थमावृत्त्याश्रयणमिति भावः । अजित्यनुवृत्तिंसामर्थ्यादिति । अजननुवृत्तौ मनिनादौ मकारादेरिन्त्वार्थं विधिरेव स्यादिति भावः । रुप्रभृताविति । रुशब्दे इत्यादाविरयर्थः । अदोषात् । पूर्वपक्ष्युक्तार्थखण्डनार्थमनुपन्यसनीयत्वादित्यर्थः । इङ्गताविन्यतरत्रेति । इङ्गिगिणा त्वसम्भवः । भूवादिसूत्रस्थभाष्येणेङ्कोरुधिपूर्व-

कयोरेव प्रयोगबोधनादिण एत्येधत्यूडिति वृद्धेर्जागरूकत्वादिति समाधानस्य समाधानान्तरादूषकत्वादाह । किञ्चेति । एकशेषेति । तन्त्रस्योपलक्षणमिदम् । सहविवक्षाया अभावेनैकशेषासम्भवात् । कैयटोक्तव्याख्यायांत्विति । तुनारुचिर्बोधिता । सामीप्यं षष्ठ्यर्थेनास्तीति । ननु प्रतियोगिज्ञानेऽभावपदबोध्याभावज्ञानस्य कारणत्वाभावेपि निषेधज्ञानस्य कारणता ऽस्त्येवेत्यत आह । प्रतियोगिज्ञानंविनेति । नन्वेवं पूर्वं ह्यपवादा इति अनेन विरोधोऽत आह । नन्वेवं पूर्वं ह्यपवादा इति । वाक्योपप्लवेति । एवं च निषेधविषये लक्षणाभावान्न हि विकल्प इति भावः।अन्यार्थेति। निषेधवाक्यार्थ पर्य्यालोचनया वाक्योपप्लवानङ्गीकारे इत्यर्थः। विकल्पापत्तेस्सत्त्वाच्चेति । निषेधविषयेप्युत्सर्गस्य लक्षणोपप्लवादिति भावः। बुद्ध्यारूढाभवन्तीति । उत्सर्गकृतलक्ष्यसंस्कारात्पूर्वमित्यर्थः । ततउत्सर्गइति । अपवादवाक्यार्थपर्य्यालोचनात्प्रागित्यर्थः । अयमर्थइति । इदम्प्रयोजनमित्यर्थः । तन्मते उत्सर्गेणापवादविषयं प्रकल्प्य रचयित्वा ऽपवादेप्रवृत्ते ततो ऽपवादविषयादन्यत्रोत्सर्गः प्रवर्तत इत्यर्थ इति । उपदेशइतिसम्बध्यतइति । अन्यथा हलविलेखने इति धातोरपि लस्येत्त्वापत्तिरिति भावः । नचोच्चारणसामर्थ्यम् । तस्योपदेश इत्यनुवृत्तावेव तात्पर्य्यग्राहकत्वस्यौचित्यात् । ननु पूर्वणकारेणेण् प्रत्याहारे ऽन्यग्रहणाभावे ऋकारादिग्रहणम्माभूदिति वक्तव्ये आदिग्रहणम्माभूदित्यसङ्गतमतआह। अचिश्निवति । प्रायइति । तेनोदीच्यग्रामादित्यादौ क्वचित्समासेपि न दोष इति भावः । ननु व्याप्तिन्यायेन दोषो ऽत आह । अतएवप्रकारेइति । एवञ्चोकारोच्चारणसामर्थ्यात्प्रत्यासत्तिरेवाश्रियत इत्यर्थः । नन्वेत्रमपि तत्तत्समुदायस्योपदेशात्वे उकारोच्चारणं व्यर्थमत आह । समुदायोपदेशेइति । नन्वन्त्यमुपदेश इत्यादित्यर्थे ऽइउणित्यादौ णादीनां हलप्रत्याहारासिद्धेरभावादित्त्वं न स्यादत आह । तत्रविद्यमानइति । यत्रसञ्ज्ञातत्रेति । प्राय इत्यस्येत्सञ्ज्ञेत्यत्रान्वयः । तेन नविभक्ताविति निषेधात्तत्रनेति भावः। डास्सिधुडितिसूत्रे इत्यर्थः । आनर्थक्यादिति । लोपस्तु तत्र न भवत्युच्चारणसामर्थ्यादिति भावः । तदुपस्थाप्यएवेति। एवंचेदमेव सामान्यापेक्षंज्ञापकं सर्वत्रोपस्थाप्य एवेत्सञ्ज्ञाकार्य्यमित्यत्रार्थेन तु तत्र पृथग् ज्ञापनकल्पनागौरवादिति भावस्तदाह । वैयाकरणइति । व्याकरणस्य विकारो वैयाकरणो ऽनुदात्तादेरनृतत्रेत्यर्थः । तेनैच्चकारस्य सूत्रे इत्सञ्ज्ञायाः प्रत्याहारसंपादनेन

चरितार्थत्वात्तदुपस्थाप्ये इत्कार्य्याभावाद्वैयाकरणे चित्स्वरापादनमसङ्गतमित्यपास्तम् । अतएव । अनुबन्धविनिर्मुक्तस्योपस्थितेरेव । तत्रोपलभ्यतएवेति । बोधके बोध्ये चोपलभ्यत एवेत्यर्थः । यञकारो गर्गादिभ्योयञ् गार्ग्य इत्यत्र यथोपलभ्यत इति भावः । कदाप्यदर्शनादिति । एवञ्चैकान्तत्वे उभयत्र दर्शनं हेतुस्तदभावश्चानेकान्तत्वे हेतुरिति भावः । एकान्तत्वंसाधयति । एकान्त्ताएवेति । तत्र हेतुमुपपादयति । शास्त्रेतत्रोपलम्भादिति । शास्त्रे सूत्रे तत्र तस्मिन्नवयविनि उपलम्भाद्दर्शनादित्यर्थः । हेत्वन्तरेणसत्प्रतिपक्षत्वमेकान्तत्वसाधकहेतोर्निराकरोति । अन्यत्रानुपलम्भाच्चेति । नन्वेकान्तत्वे फलाभावो ऽत आह । किञ्चेति । नन्विष्टापत्तिरत आह । अतएवेति । नन्वेकान्तत्वे भाष्याद्यनुग्रहाभावोत आह । तस्यलोपइतिसूत्रे भाष्यइति । नन्वेवमुपदेशग्रहणं व्यर्थमत आह । स्पष्टार्थमेवेति । अनुबन्धविनिर्मुक्तोपस्थितौ वाक्यार्थमाह । सर्वत्रेति । अनुवादे इति च । प्रमाणं स्वोक्ते ऽर्थे आह । स्पष्टञ्चेदमिति । अत एव टकारेत्सञ्ज्ञकाकारादित्यर्थादेव । यत्राट्सूत्रेतत्रनाच्पर इति । आण्नद्या इति सूत्रे नाच्परइत्यर्थः । नन्वाडजादीनामित्यत्राच्परोऽस्त्येवेत्यत आह । नेष्यतेचतत्रवृद्धिरिति । आडजादीनामित्युच्चारणेनेति भावः । वाचालइति । लित्वे हि लिच्चित्स्वरयोःपर्य्यायस्स्यादिति भावः । ननु हल्ग्रहणाभावे भूजीत्यादावुच्चारणसामर्थ्यादन्त्यस्यनेत्त्वमिति हल्ग्रहणं व्यर्थमत आह । चिरिणोतीति । धातोरन्त्यस्येति । इदित्त्वन्नुमर्थं स्यादिति भावः । भूजीत्यादीनामेकाचामवयवाभावान्नतत्फलमिति बोध्यम् । उपदेशस्याद्योच्चारणार्थकत्वे कैयटभाष्यसम्मतिमाह । अतएवेत्यारभ्योक्तमित्यन्तेन । प्राचीनमतमुपपाद्य दूषयति । परोत्विति । कःपुनरित्यस्य भाष्योक्तप्रश्नस्याशयं वर्णयति । यदि प्रत्यक्षमिति । ननु लटश्शत्रित्यत्र, नपुंसकेभावे इत्यत्र क्तक्तवतूनिष्ठेत्यत्र, वदस्सुपीत्यत्र चोच्चारणान्नायं दोषोत आह । वदस्सुपीति । तत्संग्रहोऽ भ्र आँ अप इत्येतद्व्यावृत्तिश्चेति । उपदिश्यतेऽनेनेत्यर्थे उपदेशकरणस्योपदेशत्वमेवञ्च सन्निविष्टानिपातनैरुपस्थिते शतृशानच्क्तक्तवतुक्यब्भिः प्रयोगस्था बोध्यन्ते इति तेषामुपदेशत्वमभ्रआँ इत्येतत्प्रयोगस्थानुनासिकपदेन बोध्यत इति नाकारस्योपदेशत्वमिति भावः । ननु राजसूयेत्यत्र पकाराद्यश्रवणेनौपाधिकोभेदो नाङ्गीक्रियते इत्यत आह । किञ्चेति । नन्वन्तग्रहणसामर्थ्यात्प्रत्ययादिविशिष्टान्त्य एवगृह्यते इति चेत्तत्राह । यदित्विति ।

कयोरेव प्रयोगबोधनादिण एत्येधत्यूडिति वृद्धेर्जागरूकत्वादिति समाधानस्य समाधानान्तरादूषकत्वादाह ।किञ्चेति । एकशेषेति । तन्त्रस्योपलक्षणमिदम् । सहविवक्षाया अभावेनैकशेषासम्भवात् । कैयटोक्तव्याख्यायांत्विति । तुनारुचिर्बोधिता । सामीप्यं षष्ठ्यर्थोनास्तीति । ननु प्रतियोगिज्ञानेऽभावपदबोध्याभावज्ञानस्य कारणत्वाभावेपि निषेधज्ञानस्य कारणता ऽस्त्येवेत्यत आह । प्रतियोगिज्ञानंविनेति । नन्वेवं पूर्वं ह्यपवादा इति अनेन विरोधोऽत आह । नन्वेवं पूर्वं ह्यपवादा इति । वाक्योपप्लवेति । एवं च निषेधविषये लक्षणाभावान्न हि विकल्प इति भावः।अन्यार्थेति। निषेधवाक्यार्थ पर्य्यालोचनया वाक्योपप्लवानङ्गीकारे इत्यर्थः। विकल्पापत्तेस्सतत्वाच्चेति । निषेधविषयेप्युत्सर्गस्य लक्षणोपप्लवादिति भावः। बुद्ध्यारूढाभवन्तीति । उत्सर्गकृतलक्ष्यसंस्कारात्पूर्वमित्यर्थः । ततउत्सर्गइति । अपवादवाक्यार्थपर्य्यालोचनात्प्रागित्यर्थः । अयमर्थइति । इदम्प्रयोजनमित्यर्थः । तन्मते उत्सर्गेणापवादविषयं प्रकल्प्य रचयित्वा ऽपवादेप्रवृत्ते ततो ऽपवादविषयादन्यत्रोत्सर्गः प्रवर्तत इत्यर्थ इति । उपदेशइतिसम्बध्यतइति । अन्यथा हलविलेखने इति धातोरपि लस्येत्त्वापत्तिरिति भावः । नचोच्चारणसामर्थ्यम् । तस्योपदेश इत्यनुवृत्तावेव तात्पर्य्यग्राहकत्वस्यौचित्यात् । ननु पूर्वणकारेणेण् प्रत्याहारे ऽन्त्यग्रहणाभावे ऋकारादिग्रहणम्माभूदिति वक्तव्ये आदिग्रहणम्माभूदित्यसङ्गतमतआह । अचिश्न्विति । प्रायइति । तेनोदीच्यग्रामादित्यादौ क्वचित्समासेपि न दोष इति भावः । ननु व्याप्तिन्यायेन दोषो ऽत आह । अतएवप्रकारेइति । एवञ्चोकारोच्चारणसामर्थ्यात्प्रत्यासत्तिरेवाश्रियत इत्यर्थः । नन्वेवमपि तत्तत्समुदायस्योपदेशत्वे उकारोच्चारणं व्यर्थमत आह । समुदायोपदेशेइति । नन्वन्त्यमुपदेश इत्स्यादित्यर्थे ऽइउणित्यादौ णादीनां हल्प्रत्याहारसिद्धेरभावादित्वं न स्यादत आह । तत्रविद्यमानइति । यत्रसञ्ज्ञातत्रेति । प्राय इत्यस्येत्सञ्ज्ञेत्यत्रान्वयः । तेन नविभक्ताविति निषेधात्तत्रनेति भावः। डास्सिधुडितिसूत्रे इत्यर्थः । आनर्थक्यादिति । लोपस्तु तत्र न भवत्युच्चारणसामर्थ्यादिति भावः । तदुपस्थाप्यएवेति। एवंचेदमेव सामान्यापेक्षंज्ञापकं सर्वत्रोपस्थाप्य एवेत्सञ्ज्ञाकार्य्यमित्यत्रार्थेन तु तत्र पृथग् ज्ञापनकल्पनागौरवादिति भावस्तदाह । वैयाकरणइति । व्याकरणस्य विकारो वैयाकरणो ऽनुदात्तादेरञ्तत्रेत्यर्थः । तेनैचकारस्य सूत्रे इत्सञ्ज्ञायाः प्रत्याहारसंपादनेन

चरितार्थत्वात्तदुपस्थाप्ये इत्कार्य्याभावाद्वैयाकरणे चित्स्वरापादनमसङ्गतमित्यपास्तम् । अतएव । अनुबन्धविनिर्मुक्तस्योपस्थितेरेव । तत्रोपलभ्यतएवेति । बोधके बोध्ये चोपलभ्यत एवेत्यर्थः । यत्रकारो गर्गादिभ्योयञ् गार्ग्य इत्यत्र यथोपलभ्यत इति भावः । कदाप्यदर्शनादिति । एवञ्चैकान्तत्वे उभयत्र दर्शनं हेतुस्तदभावश्चानेकान्तत्वे हेतुरिति भावः । एकान्तत्वंसाधयति । एकान्ताएवेति । तत्र हेतुमुपपादयति । शास्त्रेतत्रोपलम्भादिति । शास्त्रे सूत्रे तत्र तस्मिन्नवयविनि उपलम्भाद्दर्शनादित्यर्थः । हेत्वन्तरेणसत्प्रतिपक्षत्वमेकान्तत्वसाधकहेतोर्निराकरोति । अन्यत्रानुपलम्भाच्चेति । नन्वेकान्तत्वे फलाभावो ऽत आह । किञ्चेति । नन्विष्टापत्तिरत आह । अतएवेति । नन्वेकान्तत्वे भाष्याद्यनुग्रहाभावोत आह । तस्यलोपइतिसूत्रे भाष्यइति । नन्वेवमुपदेशग्रहणं व्यर्थमत आह । स्पष्टार्थमेवेति । अनुबन्धविनिर्मुक्तोपस्थितौ वाक्यार्थमाह । सर्वत्रेति । अनुवादे इति च । प्रमाणं स्वोक्ते ऽर्थे आह । स्पष्टञ्चेदमिति । अत एव टकारेत्सञ्ज्ञकाकारादित्यर्थादेव । यत्राट्सूत्रेतत्रनाच्पर इति । आणनद्या इति सूत्रे नाच्परइत्यर्थः । नन्वाडजादीनामित्यत्राच्परोऽस्त्येवेत्यत आह । नेष्यतेचतत्रवृद्धिरिति । आडजादीनामित्युच्चारणेनेति भावः । वाचालइति । लित्वे हि लिच्चित्स्वरयोःपर्य्यायस्स्यादिति भावः । ननु हल्ग्रहणाभावे भूजीत्यादावुच्चारणसामर्थ्यादन्त्यस्येनेत्त्वमिति हल्ग्रहणं व्यर्थमत आह । चिरिणोतीति । धातोरन्त्यस्येति । इदित्त्वन्नुमर्थं स्यादिति भावः । भूजीत्यादीनामेकाचामवयवाभावान्नतत्फलमिति बोध्यम् । उपदेशस्याद्योच्चारणार्थकत्वे कैयटभाष्यसम्मतिमाह । अतएवेत्यारभ्योक्तमित्यन्तेन । प्राचीनमतमुपपाद्य दूषयति । परेत्विति । कःपुनरित्यस्य भाष्योक्तप्रश्नस्याशयं वर्णयति । यदि प्रत्यक्षमिति । ननु लटश्शत्रित्यत्र, नपुंसकेभावे इत्यत्र क्तक्तवतूनिष्ठेत्यत्र, वदस्सुपीत्यत्र चोच्चारणान्नायं दोषोत आह । वदस्सुपीति । तत्संग्रहोऽ भ्र आँ अप इत्येतद्व्यावृत्तिश्चेति । उपदिश्यतेऽनेनेत्यर्थे उपदेशकरणस्योपदेशत्वमेवञ्च सन्निविष्टानिपातनैरुपस्थिते शतृशानच्क्तक्तवतुक्यब्भिः प्रयोगस्था बोध्यन्ते इति तेषामुपदेशत्वमभ्रआँ इत्येतत्प्रयोगस्थानुनासिकपदेन बोध्यत इति नाकारस्योपदेशत्वमिति भावः । ननु राजसूयेत्यत्र पकाराद्यश्रवणेनौपाधिकोभेदो नाङ्गीक्रियते इत्यत आह । किञ्चेति । नन्वन्तग्रहणसामर्थ्यात्प्रत्ययादिविशिष्टान्त्य एवगृह्यते इति चेत्तत्राह । यदित्विति ।

सिद्धइति । उपदेशकरणस्योपदेशे त्वऽर्थवत एव सम्भवेन वार्त्तिकानुत्थानं मम तु यत्किञ्चित्समुदायस्याप्याद्योच्चारणविषयत्वादुत्थानमिति भावः । समुदायद्वारेति । परम्परया ऽवयवानामपि करणत्वं वार्त्तिककृतापाद्य वार्त्तिकम्प्रणीतम् । अतएवोपदेशने इति वदतस्तस्य न पूर्वापरविरोध इति भावः । ननु निपातानामनर्थकानामित्यनेनाधिपरीअनर्थकाविति ज्ञापकेन च निपातानां प्रातिपादिकत्वात्तद्ग्रहणं व्यर्थमत आह । ब्राह्मणवासिष्ठेति । व्यवसितत्वञ्चेति । परिगणितत्वञ्चेत्यर्थः । परिच्छिन्नत्वादिति । परिमाणादित्यर्थः । भाष्ये प्रातिपदिकप्रतिषेधोऽकृत्तद्धित इति पठ्यते, तस्यार्थः । अकृत्तद्धितेन श्रवणं यस्य तदश्रवणन्तच्च तत्कृत्तद्धितमिति मध्यमपदलोपी समासः । एवञ्च कृत्तद्धितानां श्रवणाभावे सति प्रातिपदिकानां प्रतिषेधोवक्तव्य इति । तेन संसर्गवद्भिप्रयोगस्यापीति न्यायेनाद्योच्चारणविषयसमुदायभिन्नप्रातिपदिकानामकृत्तद्धितानामित्यर्थः । फलमिति । तत्फलितार्थमेव वार्त्तिककृतोक्तम् । तदाह । प्रातिपदिकानामित्यारभ्याकृदित्यादीत्यन्तेन । अश्रूयमाणकृत्तद्धितानां प्रातिपदिकानामाद्योच्चारणाविषयसमुदायभिन्नानामित्यर्थः । तेनोदश्विदादीनां निषेधः । अइउण् चोः कुश्चित्रञ्जङ्नङित्यादीनां कुम्भकार इत्यादीनाञ्च तदभावश्च सिध्यति । नन्वग्रहणप्रातिपदिकानामिति पस्पशास्थभाष्येण तेषामप्यपूर्व्वोच्चारणेनोपदेशत्वान्न वार्त्तिकानुत्थानमत आह । उद्देशश्चेति । ननु पस्पशास्थभाष्यस्य का गतिरत आह । एतद्भाष्यैकवाक्यतयेति । करणसाधनोपदेशपदानुवृत्तौ सर्वथा तदननुवृत्तौ च भाष्यान्तरविरोधमाह । नन्वेवमिति । अननुवृत्ताविति । भावव्युत्पन्नोपदेशपदाननुवृत्तावित्यर्थः । क्वचित्पूर्वत्रेति । आनेमुक्चेर्ङितीत्यादावित्यर्थः । क्वचिदुत्तरेति । मयउञोवोवात्रेस्त्रय इत्यादावित्यर्थः । षष्ठीपदानुवृत्ताविति । इदमुपलक्षणं सूत्रद्वयानुवृत्तेरपि । उभयोरिति । पर्य्यायेणोभयोः प्रकल्पकत्ववारणायेत्यर्थः । ननु परत्वानवकाशत्वाभ्यामिति वदतो युगपद्वलवत्त्वाभावे एकः पूर्वपरयोरिति ज्ञापकस्यावश्यकत्वमितरथा विरोधाभावात्परत्वमनवकाशत्वञ्चाप्रयोजकमेव स्यादत आह । एकइति । एवञ्चेदं तवाप्यावश्यकमिति भावः । ननु प्रकॢप्तिपक्षे कल्पितस्यादेशस्य चोच्चारणाभावादुच्चारितस्यत्वपूर्वोच्चारणाभावाच्चेत्सञ्ज्ञा न स्यादत आह । तदग्रे उपदेशपदाननुवृत्तिमभिप्रेत्यअथवेति । नानुत्पन्नेइति । गुप्तिजित्येतदतिरिक्तेनानुत्पन्नेसवि

प्रकृत्या न भवितव्यमित्यर्थः । नन्वेतद्बलाद्गुणादिभ्यः परस्सन्ननुमीयते ऽत आह । यदाचोत्पन्नस्सन्निति । कृतसामर्थ्येति । एवञ्च पञ्चम्यन्तराभावान्न प्रक्लृप्तिरिति भावस्तदाह । तत्रपरत्वविशिष्टस्येत्यारभ्यकैयटआहेत्यन्तेन । एतेनात्रापि पक्षे ऽनुमितस्योच्चारणाभावादित्संज्ञा न स्यात् । नच सन्नुच्चारित एवेति वाच्यम् । तस्यानुवादरूपत्वात् । अतएव कृतसामर्थ्या पञ्चमीत्येव भाष्ये उक्तम् । नतु कृतसामर्थ्यं सूत्रमित्युक्तम् । कैयटेपि पञ्चम्या उपक्षयादित्येवोक्तमित्यपास्तम् । उपदेशपदानुवृत्तेरेवाभावादिति दिक् । एवञ्चेति । उपदेशपदस्यभावत्वअन्तस्यानुवृत्त्यभावे चेत्यर्थः । ननु भवतां भाष्यस्यैकदेश्युक्तित्वकल्पनं ममप्रौढिवादत्वकल्पनमिति समानमत आह । प्रकृतेति । तद्भाष्येति । पूर्वपक्ष्युक्तभाष्येत्यर्थः । नोचितमिति । सूत्रार्थप्रतिपिपादयिषया प्रवृत्तस्यैव प्राबल्यादिति भावः । लक्ष्येति । लटस्सद्वेत्यादि लक्ष्येत्यर्थः । नन्वनुबन्धानामेकान्तत्वे शस्य लोपश् इति समुदायस्य चानर्थकत्वात्प्रातिपदिकत्वं न स्यादत आह । अनुबन्धानामेकान्तत्वेत्विति । एवञ्चतत्रपक्षेसएवनास्तीति भावः । अयमेवमिति । अदडादेशेनुनासिकोपधत्वंक्रियतेइत्यर्थः । व्यवहार इति । स्वतन्त्रः कर्त्तेत्यादिनिर्देशोऽनङो नकारस्यानुनासिकत्वे प्रमाणमिति भावः । यणापत्तिरिति । यस्येति चेति लोपस्तु न शङ्क्यः । यचिभमित्यत्र यसाहचर्य्यादजपि अच्त्वहल्त्वोभयधर्म्मानाक्रान्त एव गृह्यते इति ककारे भत्वाभावात् । नन्वेवमपि इकोऽ सवर्णे इति शाकल्येन प्रकृतिभावापत्तिरिति चेन्न । नसमासे इति निषेधादिति भावः । व्याख्यानादिति । संज्ञात्रयकरणरूपात् । अन्यासम्भवरूपादतोदीर्घइति विभाषा दृष्टेति हैहेप्रयोग इति च ज्ञापकरूपाच्चेत्यर्थः । सादृश्यस्यव्याख्यानादिति । अन्यासम्भवरूपाद्व्याख्यानात्सादृश्यस्यकालकृतस्यैवग्रहणमिति भावः। नन्वेकद्वित्रिमात्रावैशिष्ट्येनापि सादृश्यस्य ग्रहणसम्भवः । एवञ्चलृकारस्यैचश्च ग्रहणन्न स्यादिति प्रणवष्टेरिति ज्ञापकादेतादृशसादृश्यग्रहणासम्भवः । ननु भाष्याविचारितप्रयोजनकानां सूत्राक्षराणां पारायणादावदृष्टार्थत्वमेव न तु तत्र तत्र फलकल्पनं युक्तमतएव तदधीतेतद्वेद इति सूत्रे द्विस्तद्ग्रहणं प्रमादकृतमाचार्य्यस्येति भाष्ये उक्तम् अत आह । तदुक्तम्भाष्यइति । पदान्ताद्वेति तुगापत्तिरिति । अन्तरङ्गपरिभाषायास्तु ज्ञापकसिद्धत्वेन छत्रादिभ्योऽणिति सिद्धे छत्रादिभ्योण इति गुरु-

निर्देशाज्ज्ञापकस्यासार्वत्रिकत्वादिति भावः। ज्ञापकसिद्धत्वेनेति। एवञ्च वर्णग्रहणे जातिग्रहणमित्यस्यापि ज्ञापकसिद्धत्वेनासार्वत्रिकत्वाच्छङ्का न युक्तेति भावः। ननु ज्ञापकसिद्धस्यापि प्रवृत्तिरौत्सर्गिकी अप्रवृत्तिस्तु गमकसाध्येति दोषः प्रकृते तदवस्थ एवेति चेदन्तरङ्गपरिभाषाविषयेपि तुल्यत्वात्तदाह। अन्तरङ्गत्वेनेति। अर्वच्छब्दस्य छान्दसत्वादाह। निकृष्टमिति। बाहुलकस्यागतिकत्वादाह। अर्शआद्यजिति। निषेधस्त्विति। गार्ग्यकाश्यपगालवभिन्नमते इत्यर्थः। इत्यर्थइति। वेदभाष्ये तथैव व्याख्यातत्वादिति भावः। एतेनाहव्याप्ताविव्यस्माद्दहलोर्ण्यति छान्दसत्वाद्वृद्ध्यभावे सुपांसुलुगिति षष्ठ्यास्स्थाने सुरादेश इतीत्यपास्तम्। अर्थासङ्गतेः। व्याख्यानादिति। आस्यग्रहणसामर्थ्यादित्यर्थः। तत्सार्थक्यादिति। ननु प्रयत्नग्रहणसामर्थ्यादास्यशब्देन वायुसंयोगस्यैव ग्रहणं कण्ठादीनामिति विपरीतं किन्न स्यादिति चेन्न। तुल्यास्य त्वादिभ्य इत्यादिनिर्देशात्। नचैवं प्रयत्नग्रहणं व्यर्थमेव निर्देशेनैववायुसंयोगस्याग्रहणादिति वाच्यम्। निर्देशस्य स्थानमात्रग्रहणमास्यशब्देनेत्यर्थेनाप्युपपत्तेस्तथा सति प्रयत्नभिन्नयोरपि सवर्णसंज्ञायामञ्चित इत्यादौ यकारोपि परसवर्णस्स्यादिति भावः। वाक्श्च्योततीति। नच झ योझयीति न्यासेन नदोषः। निस्व निस इत्यादौ लोपानापत्तेः। इतिभावइति। एवञ्चाकारादीनां स्थानान्तराभावात्कण्ठ्यत्वेनैव व्यवहारः। इकारादीनान्तु स्थानान्तरसत्वात्तालव्यत्वादिना न व्यवहार इति भावः। यावत्स्थानसाम्याभावादिति। जिह्वामूलतालुस्थानाभ्यां भेदादिति भावः। ननु सूत्रमते इकारस्य एकारैकाराभ्यामुकारस्य ओकारौकाराभ्यां सावर्ण्यं स्यादत आह। भिन्नस्थानेति। वैयर्थ्यापत्तेरिति। शिक्षायां भिन्नस्थानकथनस्यैकारैकारादीनां वैयर्थ्यापत्तेरिति भावः। ननु स्थानविधानानन्तरं सवर्णसञ्ज्ञायामणुदित्सूत्रस्य व्यापाराभावात्स्थानविधायके ऽकुहेत्यादिवाक्ये ऽकारादेर्भिर्दीर्घादीनां ग्रहणभावात्तेषां स्थानविधानं न स्यादत आह। तत्तद्वर्णोत्पत्तेरिति। दन्तसंयुक्तेति। अत एव दन्त्योष्ठ्योव इत्यत्र शरीरावयवाच्चेति यत्। अन्यथा दन्तानां शरीरावयवत्वाभावान्न स्यात्। नचावयवत्वमेव दन्तानामस्त्विति वाच्यम्। यस्य च्छेदने शरीरस्य दुःखं जायते तस्यैव तदवयवत्वस्वीकारात्। स्पष्टञ्चेदं चर्म्मणिद्वीपिनंहन्तीति श्लोकस्य व्याख्यावसरे शब्देन्दुशेखरे। फलान्तरमप्याह। अतइति। अतएव ञमङणनानां नासिकास्था-

नत्वादेव । "एतेषां नासिका न स्थानं किन्तु करणं शिक्षायां तेषान्नासिकास्थानानुक्तेरिति" केषांचिन्मतं खण्डयति । यत्त्विति । ञमामपि परस्परं सावर्ण्यापत्तिरिति । तथाच हरिन्नमतीत्यादौ आदिः परसवर्णस्स्यादिति भावः । अनुवादकं सत्तस्यैवबोधकमिति । प्रयत्नभेदस्यैव बोधकमित्यर्थः । प्रयत्नभेदादिति । अइउण्सूत्रस्थेन विवृतेन संवृतस्य प्रयत्नभेदादसावर्ण्यात्तस्याणुदित्सूत्रेणाग्रहणादचूत्वाभावाद्दीर्घाभाव इत्यर्थः । एतेन प्रयत्नभेदाद्दीर्घाभावेपि आद्गुणस्य दुर्वारत्वेन सर्व्वे विधयश्छन्दसि विकल्पन्ते इत्यस्यावश्यकत्वात्तेनैव दीर्घस्यापि वारणसम्भवे प्रयत्नभेदकथनवैयर्थ्यान्न्यूनतापत्तेश्चेत्यपास्तम् । व्याख्यानादिति । तपरकरणरूपादेकशेषनिर्देशरूपाद्वा भाष्योक्तादित्यर्थः । अनुनासिकेष्विति । प्राप्तेष्वित्यर्थः । भष्भावानापत्तेरिति । तत्र घत्वे भष्भावेनापवादत्वाद्बाधितेपि जश्त्वे ऽनुनासिकभष्भावयोर्विनिगमनाविरहेण पर्य्यायेण प्रवृत्तौ कृताकृतप्रसङ्गित्वेन नित्यत्वादनुनासिकप्रवृत्तौ चानुनासिकपक्षे भष्भावानापत्तिरिति भावः । ननु पर्य्यायस्वीकारेण शास्त्रद्वयबाधापेक्षया शब्दान्तरात्प्राप्नुवतो विधेरनित्यत्वेनानुनासिकशास्त्रेण भष्भावशास्त्रबाधापेक्षया च शास्त्रद्वयसमावेशस्य न्याय्यत्वेन पूर्वम्भष्भावे ततो ऽनुनासिके नोक्तदोषो ऽत आह । वस्तुतइति । वत्वापत्तिर्दोषइति । वत्वानुनासिकयोरेकत्र समावेशासम्भवेन पर्य्यायेण प्रवृत्तौ पक्षे वत्वापत्तिर्दोष इति भावः । अतएवेति । भष्भावानुनासिकयोस्समावेशस्य न्याय्यत्वादेवेत्यर्थः । अधिकारत्वे प्रमाणमाह । श्चुत्वेधुटीति । अतएवेति । वाक्यभेदादेवेत्यर्थः । तेनेति । शृङ्गग्राहिकयेव तत्तच्छास्त्रम्प्रत्यसिद्धस्य यत्रोपस्थितिस्तस्य प्रतिपादनेनेत्यर्थः । अपवादस्य यम्प्रति । ढविधिम्प्रति । अन्यत्र । वत्वविधौ । नन्वपवादस्यासिद्धत्वे द्वित्वे परसवर्णस्य सिद्धत्वं वक्तव्यमिति वचनस्योत्थानमेव न स्यात् । तथाहि । तद्धि सय्यँन्तेत्यादौ त्रियकारादिसिद्ध्यर्थमन्यथानुस्वारस्य द्वित्वे परस्य वापदान्तस्येति परसवर्णे ऽपि पूर्वस्यापदान्तत्वाद्वापदान्तस्येत्यस्याप्राप्त्या वापदान्तस्येत्यस्यासिद्धत्वादनुस्वारस्य ययीत्यस्याप्यप्राप्त्यानुस्वारस्य श्रवणप्रसङ्गात् । अपवादस्य सिद्धत्वे तु वापदान्तस्येत्यस्य सिद्धत्वात्पूर्वस्यानुस्वारस्ययथीति परसवर्णे रूपस्य सिद्धत्वाद्वार्त्तिकानुत्थानादिति चेन्न । अपवादवचनसामर्थ्यादुत्सर्गशास्त्रे ऽपवादशास्त्रोद्देश्यतावच्छेदकानाक्रान्तस्योद्देश्यस्य ग्रहणेनाप्युपपत्तौ शृङ्गग्राहिकयेव तत्तच्छास्त्रम्प्रत्यसिद्धत्वकल्पने

गौरवमिति तदाशयात् । यदि तु साक्षाद्विधिभूतोत्सर्गशास्त्रे संकोचकल्पनापेक्षया ऽपवादशास्त्रे ऽनुवृत्तातिदेशभूतपूर्वत्रासिद्धमिति शास्त्रीयपूर्वशब्दे एवोत्सर्गसूत्रभिन्नस्य ग्रहणमिति संकोचः । एवञ्चैकदैव पूर्वत्रेत्यस्य वाक्यार्थो न तु शृङ्गग्राहिकयेव तत्तच्छास्त्रं प्रत्यासिद्धत्वस्य पूर्वम्प्रवृत्तिरित्येवापवादेनोत्सर्गस्य बाध इति स्वीक्रियते। ततोलाघवमिति । द्वित्वे परसवर्णवचनं न कर्तव्यमिति महदेव लाघवम् । अतएवापवादो नासिद्धो वचनप्रामाण्यादिति प्रकृतसूत्रभाष्योक्तं सङ्गच्छते। एतत्सर्वं ध्वनयता शृङ्गग्राहिकयेव तु इत्यरुचिबोधकस्तुशब्दो मूलकृता प्रयुक्त इति दिक् । ननु पूर्वत्रेत्येव सूत्रमस्तु । आमन्त्रितं पूर्वमविद्यमानवदित्यतो ऽविद्यमानवदित्यनुवर्तते । एवञ्च मनोरथ इत्यादौ पूर्वत्रोत्वे रोरीति लोपे ऽविद्यमानवदिति सिद्धे ऽसिद्धमिति व्यर्थमत आह । सिद्धमिति । अविद्यमानवदित्यनेन तु न निर्वाहः । गोमानित्यादौ नलोपापत्तेः। शास्त्रस्याविद्यमानत्वेपि कार्य्यस्यविद्यमानत्वात् । कुलालस्याविद्यमानत्वे ऽपि तत्कृतघटस्य विद्यमानत्ववदिति भावः। अन्तरङ्गत्वात्त्रैपादिकमिति । इदम्प्राचामनुरोधेन । स्वमते त्वन्तरङ्गपरिभाषायास्त्रिपाद्यामप्रवृत्तेः । अकृतव्यूहपरिभाषाया अभावाद्वाचिक इत्यादेरसिद्धेश्च पूर्वत्रेत्यस्य पूर्वविधेयपरमसिद्धमित्यर्थस्य वाचिक इत्यत्र स्वयमेवोक्तत्वान्नान्तरङ्गस्य पूर्वम्प्रवृत्तिरिति तत्त्वम् । दिगिति । दिगर्थस्तु नलोपे सुप्स्वरसञ्ज्ञातुग्विधयः कृतीति न्यासेन पूर्वत्रेत्यस्यासम्बन्धेन च प्रकृते नलोपे कृते एते न भवन्तीत्यर्थेनादोषे ऽपिगोमानित्यादौ संयोगान्तलोपादेरनापत्तिरिति । शच्छयोरपीति । तयोस्सावर्ण्ये राजश्छिन्धीत्यत्र झरोझरीति लोपस्स्यात् । आदन्तइति । अदन्तत्वे ह्यन्तस्स्थाभिरित्यसङ्गतं स्यात् । द्विव्यञ्जनाश्रयोविधिरिति । संयोगसंज्ञेत्यर्थः । नाणुदित्सूत्रेण तद्ग्रहणमित्युक्तमिति । यद्यप्यनुस्वारपरसवर्णयोरसिद्धत्वेनाप्यत्र समाधानं वक्तुं सुकरन्तथाप्यनचिचेति द्वित्वसिद्ध्यर्थमेतत्समाधानस्यावश्यकत्वेन संयोगसञ्ज्ञायामपि समाधानस्य समाधानान्तरादूषकत्वादिति न्यायेनेदमेवोक्तमिति भावः । एकारस्य तालव्यत्वमोकारस्यौष्ठ्यत्वमिति । अत्र मते यजुष्येकेषामलंखल्वोरित्यादिनिर्देशादिगेङोस्सावर्ण्याभाव इति भावः। एकारशकारादीनामिति । आदिना विवृतमूष्मणामित्यत्रोष्मशब्देन वर्गद्वितीयचतुर्थयोरपि ग्रहणात्तयोर्विवृतत्वन्नाज्झलावित्यादिनिर्देशात्तत्तद्वर्गीयोपि प्रयत्नः प्रयत्नांशे च यत्किञ्चित्साम्यन्निर्देशादाश्रीयते इति मते इकारछकारादीनां ग्रहणं नस्या-

दिति । भावइति । तथा च नाज्झलावित्यादिनिर्देशासङ्गतिः । परवल्लिङ्गमिति । नपुंसकत्वञ्च स्यादित्यर्थः । अच्पदबोध्यत्वमिति । अचूत्वं स्यादित्यत्राचपदस्योपस्थानात्तस्याच्त्वबोध्ये लक्षणेति । ननु प्रत्याहारेषु तद्वाच्यत्वाच्ये लक्षणेति पक्षेऽप्ययन्दोषोस्त्येवेत्यत आह । व्यक्तीति । जातिपक्षे न दोष इति भावः । ज्ञापयतीति । बोधयतीत्यर्थः । टित्किन्मित्स्विवति । इड्यक्तुगन्स्वित्यर्थः । ध्वनितमिति । प्रत्ययपदस्य प्रतीयते विधीयते इत्यस्यायुक्तत्वमित्यर्थः । ज्ञाप्यतइति । एवं च घटवदिममित्यादौ भाव्यमानेनेत्यनेनान्तरङ्गत्वादणुदित्सवर्णस्येत्यस्यैव निषेधेऽपि न दोष इति भावः । परास्तमिति । अष्टन आ इत्यर्थे बाध्यसामान्याचिन्ताया आवश्यकत्वादिति भावः । चोभिन्नइति । ननु स्वरूपसमुच्चायकस्त्वस्यापि स्वसवर्णत्वेन फलाभावात्तदेव ध्वनयन् वक्ष्यति । ह्रस्वेत्यादि । भेदमारोप्येति । मूलानुरोधेनेदम् । स्वमते सादृश्यस्य भेदाघटितत्वात् । व्याख्यानादिति । उर्ऋदित्यत्र तपरकरणरूपादित्यर्थः । नल्वदित्प्रयुक्तेति । कॢप्तशिखेत्यादौ तु वत्पदघटितानां त्रिपाद्यामप्रवृत्तेर्न दोष इति भावः । ऐऔइत्यनयोरसत्त्वशङ्कावारणाय सूत्रमावश्यकमत आह । अत्रेति । वैकल्पिक इति । अत्र चाणुग्रहणमेव मानमिति भावः । ननु यणो गुणाभेदकत्वेन सिद्धत्वादज्ग्रहणेनैव सिद्धावण्ग्रहणं व्यर्थमत आह । गुणाअभेदकाइति । अवर्णग्रहणप्रत्याख्याने आह । व्याख्यानाच्चेति । वृद्धिरादैजिति तपरकरणसामर्थ्यरूपादित्यर्थः । गुणानाम्भेदकत्वमिति मते आह । भाष्येइति । उपसर्गादृतीति तपरकरणादिति । अनेन च टाङसीति सूत्रे आदित्येव च्छेद इति ज्ञाप्यते इति बोध्यम् । ध्वनितञ्चेदं रामादित्युदाहरणे द्वित्वमिति प्रतीकमादाय पूर्वत्रासिद्धीयमद्वित्वे इत्यादि ग्रन्थेन स्वयमेव । धकारादीति । आदिनादकारपरिग्रहः । पूर्वार्थमिति । अत एवादित्यस्य प्रातिपदिकत्वेन पदत्वाज्जश्त्वं सिध्यतीति भावः । नचादैचामेव सञ्ज्ञात्वमिति कुतो नात आह । वृद्धीति । व्याख्यानादिति । एकस्यानेकसञ्ज्ञाकरणे प्रयोजनाभावरूपादित्यर्थः । ननु टिघुभादीनां साधुत्वं न स्यादनादित्वाभावाद्व्याकरणसंस्कृतत्वाभावाच्चाऽत आह । आसाञ्चेति । अत्रेति । कार्य्यकालपक्षे इत्यर्थः । भूवादयोधातवः । भूवौ आदी येषामिति विग्रहः । तत्र वाशब्दस्य वानिरूपित इत्यर्थः । आदिशब्दस्य प्रकारोर्थः । एवञ्च वानिरूपितसादृश्यवन्तो धातुसञ्ज्ञका इत्यर्थः । पदत्वानापत्तेरिति । ननु निपा-

तानामनर्थकानामिति वार्त्तिकस्या ऽनर्थकग्रहणस्य फलाभावेन प्रकृतसूत्रे प्रत्याख्यानादत्र तेन वार्त्तिकेन प्रातिपदिकत्वं स्यादेवेति चेन्न। अर्थवत्सूत्रे भाष्ये ऽधिपरीअनर्थकाविति ज्ञापकादनर्थकनिपातानामर्थवत्प्रयुक्तं कार्यम्भवतीत्युक्त्या तद्वार्त्तिकस्य प्रत्याख्यानात्। आणत्रयति। आज्ञापयति। वट्टयति। वर्त्तयति। इत्यादीनामिति। वर्द्धयतीत्यर्थकं वड्ढयतीति बोध्यम्। ननूदित्त्वं नुमर्थं स्यादत आह। धात्वधिकारेति। इत्यभिव्याप्येति। रीश्वरादिति ल्यब्लोपे पञ्चमीति भावः। द्योतकत्वमनुभूयत इत्यादौ। वाचकत्वमहंयुरित्यादौ। कार्य्यस्यापि प्रयोगाश्रयत्वादाह। यथाप्रयोगमिति। गतिरनन्तर इति प्रशब्दस्येति भावः। अव्ययपूर्वपदप्रकृतिस्वरस्तु प्रशब्दस्य स्यात्। अत एव निपातद्वयोच्चारणं चरितार्थम्। अभेदविवक्षयेति। प्रकृतिवदनुकरणमित्यतिदेशेनाव्ययत्वादिति भावः। सुबनुत्पत्तेरिति। प्रत्ययलोपविधायकशास्त्रैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनाव्ययादाविति लुकेति भावः। यत्रत्विति। उपसर्गस्यायतावित्यादावित्यर्थः। ननु वार्त्तिके कार्य्यनिर्देशात्तयोः कर्तव्ययोस्तत्प्रतिषेध इति वार्त्तिकार्थाद्वार्त्तिकस्योपसर्गसञ्ज्ञासूत्रस्थत्वलाभेन तद्दृष्ट्या रुत्वस्यासिद्धत्वमत आह। षत्वणत्वयोरित्यस्येति। अनेन वार्त्तिकस्य तत्तत्सूत्रस्थत्वं सूचयति। नन्वेतादृशेऽर्थे किम्मानमत आह। अतएवेति। स्पष्टमेवेति। अपदुःसुष्विति न्यासकरणेनेति भावः। दुसइति। निसोऽप्युपलक्षणमिदम्। दुरयतइत्यादाविति। आदिना निरयते इत्यस्य संग्रहः। अनुवादवाक्येइति। हन्तीति पलायत इत्यादौ हेत्वादाविति शब्द इति भावः। व्याख्यानादिति। द्वन्द्वान्ते श्रूयमाणं पदमिति न्यायरूपादिति भावः। नियमार्थमिति। अर्थे कार्य्यबाधे उपात्तशब्दबोध्यार्थवाचकसर्वशब्दग्रहणं यत्र प्रसक्तं ततः तादृशार्थविशिष्टोपात्तशब्दस्यैव ग्रहणमित्येवं नियमार्थमित्यर्थः। नत्वपूर्वविधित्वम्। गौरवादारम्भप्रत्याख्यानयोः फलभेदापत्तेश्च। अत एवापत्यादिषु न स्वरूपग्रहणमिति भावः। इयमिति। अर्थवद्ग्रहण इति गौणमुख्ययोरित्यभियुक्तेति परिभाषे इत्यर्थः। अनियमप्रसक्तेश्चेति। चो हेतौ। यतो ऽर्थोपस्थितिरतो ऽनियमप्रसक्तिरित्यर्थः। नन्वत इञित्यादावत इतिवर्णादप्यर्थोपस्थितिसम्भवो ऽत आह। आकेरस्पष्टमिति। इत्यादौचारितार्थ्येनेति। तत्रात इत्यनुवृत्त्या न स्वरूपग्रहणमिति भावः। शङ्कानिवारणार्थमिति। अर्थे कार्य्यबाधादेव नैतत्सूत्रं प्रवर्त्तते इति

भावः । ननु शब्दस्यापि शब्दबोध्यत्वात्सञ्ज्ञाविषये उभयगतिज्ञापनाच्चोपसर्गे घो-
रित्यादौ दोषो ऽत आह । षान्तेति । अतएव । अर्थे कार्य्यस्य बाधादेव । अन्य-
थेति । सूत्रस्यापूर्वविधायकत्वे इत्यर्थः । स्वरूपग्रहणमिति । ज्ञापकसिद्धस्यासार्वत्रिक-
त्वादङ्कशब्दसाहचर्य्याच्चेति भावः । नदीशब्देन स्वरूपग्रहणमिति । पौर्णमास्या-
ग्रहांयणीग्रहणसामर्थ्याच्छरदादिषु विपाट्छब्दपाठसामर्थ्याच्च नदीसञ्ज्ञकस्य न-
दीवाचकस्य च न ग्रहणमिति भावः । अतएव । ज्ञापकसिद्धस्यासार्वत्रिकत्वादेव ।
सिद्धंवचनमिति । अशब्दसञ्ज्ञेति वचनमित्यर्थः । कर्मात्रविधेयमिति । प्रदेशवाक्ये-
न यद्विधेयन्तदेतद्वाक्यार्थबोधे कर्मेत्यर्थः । अन्येषांवाशब्दानामिति । सर्वनामादि-
शब्दानामित्यर्थः । व्यापाराभावादिति । इतरव्यावृतिकरणरूपव्यापाराभावादित्य-
र्थः । अताद्वंशशब्दरूपमिति । शब्दानुपस्थितमित्यर्थः । तदन्तविधिरिति । सर्व-
नामसञ्ज्ञादावित्यर्थः । इनंशे । अनर्थकेनंशे । एरजित्यादीति । आदिना टिड्ढा-
णञित्यादे रोणीत्यादेश्च संग्रहः । अयइत्यादाविति । आदिनौपगवी रौण इत्यादे-
स्सङ्ग्रहः । पाठ्यमिति । अन्यथा व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति निषेधादौप-
गवी रौण इत्यादौ ङीवणादिश्च न स्यादिति भावः । द्वितीयाश्रितेत्यादाविति ।
आदिना पूर्वसदृशेत्यादेस्सङ्ग्रहः । तस्येति । पूर्वादिशब्दस्येत्यर्थः । द्वितीयादौ
तु गतिकारकोपपदानामित्यनेन सुबुत्पत्तेः प्राक् कृदन्तेन समासबोधनात्सुपेत्यस्या-
न्वयेन लक्षणां विनापि निर्वाह इति भावः । सौत्रनाडिरिति । अत्रानुशतिकादित्वादु-
भयपदवृद्धिः । गृह्यमाणेति । प्रातिपदिकत्वव्याप्यधर्मवत्त्वेन गृह्यमाणेत्यर्थः । तेन
यशस्वोत्यादावस्मायामेधेति विनिस्सिध्यति । ननु स्वरूपेणोच्चार्य्यमाणेत्यर्थः ।
तेन प्रियपञ्चन्शब्दात्सङ्ख्याया अतीति कन्नेति भावः । वनोरचेत्यादाविति ।
आदिना यञिञोश्चेत्यस्य सङ्ग्रहः । विरामोऽवसानम् । ननु रजतिर्दद्वतो ऽश्व
इत्यादावपि पूर्वत्र वर्णाभावसत्त्वादवसाने विद्यमानानां रेफदकाराणां विसर्गचर्त्वा-
नुनासिकास्स्युरत आह । सचेति । तत्र प्रमाणमाह । व्याख्यानादिति । व्याख्या-
नमेवाह । अभावस्यापीति । सुप्तिङन्तम् । व्याख्यानादिति । तिङ्साहचर्य्यात्सुप्प्र-
त्याहारो न तु सप्तमी बहुवचनमित्यर्थः । शब्दरूपमिति । प्रत्ययग्रहण इति
परिभाषया लब्धन्तदादिरूपमित्यर्थः । स्वप्रकृत्यवयवकेति । स्वश्च प्रकृतिश्चावय-
वौ यस्येत्यर्थः । ननु रदाभ्यामित्यादावीदूदेदित्यादौ च सञ्ज्ञाविधाविति नि-

स्यावकाशान्न सामर्थ्यमित्याशङ्कते । नचेत्यादिना । अनुवृत्तेरिति । उपस्थितेरित्यर्थः । पदसमुदायस्यनपदत्वमिति । तेन देवदत्तः पचति भवतीत्यादेस्तिङ्ङतिङ इति निघातो नेति भावः । नन्वियानित्यादौ सुब्लुगर्थञ्जायमानप्रातिपदिकत्वेनैव सुबुत्पत्तिस्सेत्स्यतीति व्यपदेशिवद्भावस्य तदादितदन्तत्वानयने न प्रयोजनमत आह ॥ अतएवेति । व्यपदेशिवद्भावाङ्गीकारादेवेत्यर्थः । हलोनन्तराः । तस्येति । आनन्तर्य्यस्येत्यर्थः । एवौचित्यादिति । एवेनोपलक्षणस्य व्यावृत्तिसम्भवे विशेषणत्वमेवोचितमिति भावः । अनिष्टापत्तेरिति । सङ्ख्येत्यादौ स्कोरिति लोपाद्यापत्तेरिति भावः । ननु बहुवचनाद्बहूनामेव संयोगसंज्ञास्यान्नद्वयोरत आह । हलइतीति । सौत्रमितीति । अनेकत्वार्थकं बहुवचनं न तु बहुत्वार्थकमित्यर्थः । नन्वत्र पक्षे ऽपूर्वकल्पनापत्त्या गौरवमत आह । यद्वेति । बहूनामेवेति । समुदाये वाक्यपरिसमाप्तेर्बहूनामेव प्राप्तेरिति भावः । चिन्त्यमेवफलभावादिति । एकस्मिन्प्रयोगे द्वयोर्बहूनां चेति सञ्ज्ञाद्वयस्वीकारे फलाभावादित्यर्थः। एवञ्च बहूनां समवधानेपि यत्र द्वयोरसञ्ज्ञायाः प्रयोजनमस्ति तत्र द्वयोरेव सञ्ज्ञा यत्र तु बहूनाम्फलमस्ति तत्र बहूनामेवेत्येकयैकसञ्ज्ञया सकललक्ष्याणां निर्वाहे एकयोगे निष्फलसञ्ज्ञाद्वयस्वीकारो न युक्त इति भावः । एतेन झलादिप्रत्ययपरकसंयोगाद्योस्सकारककारयोर्लोप इति स्कोरित्यस्यार्थान्मङ्क्तेत्यादौ बहूनां संयोगसञ्ज्ञाया अभावात्सकारलोपो न स्यादित्यपास्तम् । हलइति । बहुवचनं सौत्रमिति, यद्वेति च पक्षद्वये मानमाह । तत्रतत्रेति । प्लुतस्स्यादिति । प्रत्येकं संयोगसञ्ज्ञेति पक्षे इदम् । समुदायसञ्ज्ञापक्षे तु संयोगान्तलोपस्स्यादिति बोध्यम् । भूतपूर्वलघूपधग्रहणादिति । लघुत्वांशे भूतपूर्वगतिस्वीकारो न तूपधांशे ऽपि । एतेन कुण्डितेत्यादावपि ज्ञापकेन भूतपूर्वलघूपधाश्रयो गुणःस्यादित्यपास्तम् । लघूपधत्वमात्रांशे भूतपूर्वत्वाश्रयणेन क्नोः कित्त्वस्य चारितार्थ्येनोपधांशे ऽपि तत्स्वीकारे मानाभावादिति भावः ॥ इति सञ्ज्ञाप्रकरणम् ॥

इकोगुणवृद्धी ॥ व्याख्यानादिति । अन्यस्यासम्भवरूपादित्यर्थः । तथाहि ॥ न सञ्ज्ञा समानाविभक्तयन्तत्वाभावाद् वृद्धिरादैच् इक् च अदेङ् च गुण इति सिद्धे इको गुणवृद्धी इत्यारम्भाज्जाग्रो ऽविच्चिण्णल्ङित्स्यारम्भाच्च । नापि विधिः । सार्वधातुकार्द्धधातुकयोरित्यादीनां नियमार्थत्वे गौरवापत्तेः। नियमोपि न। अन्येनासिद्धेः । नाप्यतिदेशः । समानविभक्त्यन्तत्वाभावात् । अधिकारोपि न । योगविभागसामर्थ्या-

दिति । नन्वनुवृत्तमपि स्वादिष्विति सूत्रे पदपदं सञ्ज्ञापरमेवात आह । यद्वेति । गुणो गुणोवृद्धिर्वृद्धिरितीति । गुणवृद्धिपदजन्योपस्थितिविषयौ ये गुणवृद्धी इत्यर्थः । इतिवार्थादिति । एवञ्च त्यदादीनामित्यदावपि सञ्ज्ञाया उच्चरितत्वादुपस्थितिस्स्यादिति भावः । एवञ्चेति । अत्र गुणवृद्धिग्रहणसामर्थ्यादचश्चेत्यत्राजित्यनुवृत्तिसामर्थ्याच्चेत्यर्थः । एवञ्चेति । प्रमाणाभावाद्विधीयत इत्यध्याहाराभावे चेत्यर्थः । इत्यादेरिति । आदिना तस्मादित्युत्तरस्येत्यस्य सङ्ग्रहः । इत्यादाविति । आदिनोदीचामातः स्थाने इत्यत्र यकपूर्वाया इत्यस्य संग्रहः । ननूदीचामिति सूत्रस्थं स्थाने ग्रहणमेव मानमत आह । उदीचामिति । अजितिचानुवर्ततइति । एवञ्चैतदनुवृत्तिसामर्थ्याद्विधीयत इत्यध्याहारादनुवादे ऽप्रवृत्त्या ह्रस्वस्य पिति च्छेच, दीर्घादित्यादावचस्स्थानिकस्य ह्रस्वस्य दीर्घस्य तुगित्यादिर्नार्थ इति भावः । इताविति किमिति । अर्श आद्यचा टकावित्येवास्त्विति प्रश्नः । मिदचोऽन्त्यात्परः । तृणहइत्यादीति । आदिना वन्धुनि बहुव्रीहावित्यस्य ग्रहणम् । तस्यैवेत्यर्थइति । नत्वन्त्यस्याच इत्यर्थः । सुहिन्स्वित्यादौ षत्वापत्तेरिति भावः । प्रसङ्गश्चसातिसम्भवे इति । एवंचारेत्यादावुरदत्वोत्तरं हलादिःशेषदीर्घयोः कर्तव्ययोरनर्थकस्यापि प्रसङ्गो ऽसंभवाद् ग्राह्य इति भावः । अत्रोरदत्वे कृतेऽभ्यासत्वन्तु तत्स्थानापन्न इति न्यायेन बोध्यम् । नशब्दनित्यताहानिरिति । आरेत्यादौनित्यत्वाहानिस्तु ऋऋइत्यस्या ऽऋ इत्यादेशे तत उत्तरस्य गुण इत्यस्य आर्ऋ इत्यस्य स्थाने आआरित्यादेशे ततस्सवर्णदीर्घेण आरिति कल्पनया बोध्यम् । नन्वारेत्यादावुरदत्त्वे श्रौतस्थानित्वेनात आदेरिति दीर्घहलादिःशेषयोरपि श्रौतस्य स्थानित्वे ऽन्यतरस्मिन् कृते ऽभ्यासत्वं लौकिकैकदेशविकृतन्यायेन सेत्स्यतीति किमनर्थस्यारित्यस्य स्थानिवत्त्वेनेति चेन्न । अर्द्धविकारेणैव ऽलौकिकन्यायस्याप्रवृत्तेः । ननु गणयतीत्यादावचः परस्मिन्निति स्थानिवत्त्वं न स्यादत आह । किञ्चेति । तत्र प्रमाणमाह । अतएवेति । नन्वेषो यन्नित्यादावचः परस्मिन्नित्यस्यावकाशत्वमत आह । आदीति । आदिना नपदान्तस्येत्यस्य संग्रहः । स्पष्टञ्चेदमिति । सर्वे सर्वपदादेशा इत्यर्थः । त्रिमात्रो नेति । स्थाने ऽन्तरतम इत्यस्यापूर्वविधायकत्वाभावादिति भावः । स्थानेग्रहणेइति । स्थाने ग्रहणं यस्मिन्निति बहुव्रीहिणा षष्ठीस्थानेयोगेति सूत्रे इत्यर्थः । एकदेशानुवृत्त्येति । एकदेशस्य षष्ठीपदस्यानुवृत्तिर्यया स्वरितत्वप्रतिज्ञया तयेत्यर्थः । स्था-

नेग्रहणमिति । इदञ्च तात्वादिस्थानपरमित्यर्थः । तस्मिन्निर्दिष्टे । व्याख्याना-दिति । शब्दपरत्वे तस्मिन्नणि चेत्यत्रैवास्योपस्थितौ तस्मिन्निर्दिष्टे पूर्वयोर्युष्माका-स्माकयोरणिचेत्येकास्मिन्नेव लाघवात्कर्तव्ये एतदारम्भादेतत्साहचर्य्यादुत्तरत्रापि श-ब्दपरत्वाभावबोधनाच्चेति भावः । अन्यथा । अर्थपरत्वानङ्गीकारे । इत्यत्रैवेति । इदमु-पलक्षणन्तस्मान्नुड् द्विहल इत्यस्यापि । ननु सप्तमीनिर्दिष्टे इत्येवास्त्वित्यत आह । तद्बो-ध्यार्थस्येति । ननु तच्छब्दस्य सप्तम्यन्तपदवाचकत्वेनेदमसङ्गतमत आह । इतिशब्द इति । तस्य । तच्छब्दस्य । तदर्थपरत्वमिति । सप्तम्यन्तपदार्थपरत्वमित्यर्थः । एवञ्च तच्छब्दस्य सप्तम्यन्तार्थपरत्वे च । ननु कर्तृकर्मणोरित्यादावप्येतदुपस्थितिस्स्यादत आह । अत्रसूत्रेइति । तत्र मानमाह । अतएवेति । फलमाह । अतएवेति । विफलइतीति । उत्तरत्रैव निर्दिष्टादिति वक्तव्यमिति भावः । उत्तरांशेति । उत्तरस्येत्यंशे इत्य-र्थः । तत्र फलमाह । अतइति । मानमाह । अतएवेति । षष्ठ्यंशविकलेति । छन्द-सिपरेपि, व्यवहिताश्चेत्येव सामान्यापेक्षमंशविकलायाः परिभाषायाः प्रवृत्तौ ज्ञा-पकमिति भावः । अलोन्त्यस्य । षष्ठीनिर्दिष्टेति । निर्दिष्टेत्यध्याहृत्य तद्योगे षष्ठी-पदं तृतीयान्तेन विपरिणम्यते तेनायमर्थलाभ इति भावः । षष्ठ्यन्तमिति । तेन संयोगान्तस्यलोपः, पादस्यलोप इत्यादौ नाव्याप्तिरिति भावः । अनेकाल् । ननु भूतपूर्वगतिस्वीकारे गौरवमत आह । किञ्चेति । अनन्तरस्येति न्यायेनेति । वा-ध्यविशेषचिन्तायामित्यर्थः । इत्यस्यैव निषेधापत्तेरिति । तथा च जरसावित्यादाव-लोन्त्यपरिभाषया ऽन्त्यस्य जरसा देशस्स्यादिति भावः । ननु ङिच्चेत्यस्यारम्भात्सा-मान्यचिन्तामाश्रित्यालोन्त्यस्यापि बाधान्न दोष इति चेन्न । निर्दिश्यमानपरिभा-षायां अपि बाधापत्तौ निर्जरसावित्यादावङ्गस्यादेशापत्तेः । नचाल इत्यनुवर्त्य तत्सामर्थ्यादलोऽन्त्यस्येत्यस्यापि बाध इति वाच्यम् । एवमप्यणिञोरनार्षयोरि-त्यनेन निर्दिश्यमानपरिभाषया ऽणिञोः ष्यङ् न स्याद्विङ्क्लोर्ङित्वस्य कर्तव्यता स्याच्च । स्वरितेनाधिकारः । ननु स्वरितत्वस्य दोषविशेषरूपत्वे गौरवमत आह । स्वरूपमिति । परमिति । रामेभ्य इत्यादौ पूर्वदीर्घात्परमेत्त्वमित्यर्थः । परान्नित्यं बलवत् तुदतीत्यादौ । तत्र परात् गुणान्नित्यत्वाच्छप्रत्ययादिर्भवति । परादन्तरङ्गम् अयजे इन्द्रम् । परात्सवर्णदीर्घादन्तरङ्ग आद्गुणः । नित्यादन्तरङ्गं ग्रामणिनीति नुमः पूर्वं ह्रस्वः । एवं परनित्यान्तरङ्गेभ्यः प्रतिपदोक्तं बलवत् । तस्य बलवत्त्वे

बीजं तु शीघ्रोपस्थितिकत्वम् । मयड्वैतयोरिति सूत्रस्थमेतयोरिति ज्ञापकमप्यत्र । तथा हि तद्योगविभागेन पुनर्विधानद्वारा बिल्वाद्यणूबाधनार्थम् । न चार्थद्वयलाभार्थम् । अधिकारादेव सिद्धेः । अन्यथा परत्वान्मयटि तद्वैयर्थ्यं स्पष्टमेव । तदुक्तं भाष्ये । अधिकारादेवार्थद्वयलाभे एतयोरित्यपवादविषयेपि प्रवृत्त्यर्थं तेन बिल्वमयं बैल्वमिति सिद्धमिति । परात्प्रतिपदोक्तमौपानह्यं चर्म । परमपि चर्मणोञिति बाधित्वा ऋषभोपानहोर्ञ्य इति ञ्यः । नित्यात्प्रतिपदोक्तं स्वाम्पि । नुमं बाधित्वा ऽप्तृन्निति दीर्घः । अन्तरङ्गात्प्रतिपदोक्तं सेदुषः । इटं बाधित्वा संप्रसारणम् । बलवानिति । परनित्यान्तरङ्गप्रतिपदोक्तेभ्य इत्यर्थः । पूर्वादपवादो दुग्धम् । ढत्वं बाधित्वा घत्वम् । परादपवादः पचन्ति । दीर्घं बाधित्वा पररूपम् । नित्यादपवादो रमायाम् । याटं बाधित्वा आम् । अन्तरङ्गादपवादो हेगार्गीमात । कपं बाधित्वा मातजादेशः । प्रतिपदोक्तादपवादो ऽमीमृजम् । वृद्धिं बाधित्वा ऋदादेशः । बहिरङ्गापोहनरूपत्वादिति । बहिरङ्गस्यापोहनं दूरीकरणं रूपं यस्य तद्रूपत्वादित्यर्थः ॥ इति परिभाषाप्रकरणम् ॥

इकोयणचि ॥ मूलोक्तार्थश्शब्दानित्यतावादिमते न संभवतीत्यत आह । कार्यशब्दवादेइति । नित्यशब्दत्वपक्षे इग्घटितस्य प्रसङ्गे यण्घटितं साधु इत्यर्थो बोध्यः । एतेनेति । जातिपक्षे यथासंख्याश्रयणेनेत्यर्थः । आन्तरतम्याश्रयणे दोषाभावमाह । स्थानतइति । ननु सप्तम्यन्तपाठपक्षे दोष एवेत्यत आह । स्थानेऽन्तरतमेइति । चोविध्यर्थइति । अत एवाचः परस्यैव यरो द्वित्वं भवति न यत्र कुत्रेति भावः । तत्र प्रमाणमाह । ध्वनितं चेदमिति । एतेनानचीति निषेधसामर्थ्याद्विध्यनुमानं तस्य च यत्र कुत्रापि विद्यमानस्य यरो द्वित्वं भवतीत्यर्थो, निषेधस्य त्वचः परस्य यरो ऽचि परे द्वित्वं नेत्यर्थ इत्यर्थ इत्यपास्तम् । नन्वनचीति पर्युदासेनापि भाष्यं सुयोजमत आह । अवसानइति । प्रसज्यप्रतिषेधइति । हलीति वक्तव्ये ऽनचीति गौरवकरणसामर्थ्यादिति भावः । द्विरुक्तधातुपूर्वभागत्वादिति । तत्स्थानापन्न इति लौकिकन्यायेनेति भावः । स्थान्यलसाधारणधर्मत्त्वएवेति । स्थान्यलवृत्तिधर्मत्त्व एवेत्यर्थः । नतु स्थान्यलवृत्तीत्यर्थः । नायकसिद्धिरिति । अन्यथा स्थानिन्यादेशाभावस्यादेशेप्यभावातिदेशः स्यादिति भावः । भाष्येपीति । तृज्वत्सूत्रे इत्यर्थः । तत्र । चिण्वद्भावे । तत्रेति । कार्यातिदेशे इत्यर्थः । अनपेक्षिता-

र्थसंनिधानः । अर्थशब्दः प्रयोजनवाचीति भावः । शास्त्रातिदेशे ऽप्यादेशे स्थानिधर्माभावेपि स्थानिवदादेशो शास्त्रं प्रवर्त्तेत इत्येवार्थ इति तत्त्वम् । नन्वत्र पक्षे कार्यातिदेश इत्यक्षरस्वरसभङ्गो ऽत आह । यद्वेति । शास्त्रातिदेशे, यद्वेति कार्यातिदेशे च विशेषमाह । एवमिति । अत्र प्रमाणमाह । अतएवेति । व्यवहार इति । अभियुक्तानामित्यर्थः । तत्फलं युष्मदित्यत्रादादेशे एत्वाभावः । सर्वातिदेशेष्विति । निमित्तव्यपदेशशास्त्रकार्यातिदेशेष्वित्यर्थः । सर्वातिदेशेषु विशेषान्तरमाह । यन्निमित्तेति । शास्त्रीयमेवेति । तेनादेर्घस्लादेशे व्येञो वयादेशे च तासौ नित्यानिट्त्वस्याशास्त्रीयत्वाज्जघसिथेत्यत्र विवयिथेत्यत्र चोपदेशे ऽत्वत इतीण्निषेधो नेति भावः । लोकसिद्धन्यायेनेति । दध्नीत्यादिसिद्ध्यर्थमवश्याश्रयणीयेनेति भावः । अतएवेति । एतन्न्यायस्य लौकिकसिद्धत्वादेवेत्यर्थः । तत्राशास्त्रीयविकाराश्रयणे एतन्मात्राश्रयणे च मानमाह । अतएवेति । अन्तादिवच्चेतीति च । अन्यवन्नेत्यर्थइति । नत्वन्यभिन्नवदित्यर्थः । तथा सत्येकदेशोविकृतो यस्य तद्विकृतावयवं स्वापेक्षया अन्यद्यत्सर्वं तद्भिन्नं स्वं तेन तुल्यं स्वं भवतीत्यर्थे स्वशब्देन विकृतावयवस्यैव पूर्वमन्यत्वे ऽवधित्वेनान्वयात्तदपेक्षयान्यत्वमविकृतस्यापीत्युत्तरत्रापि स्वशब्देन विकृतस्यैवोपस्थित्या लक्ष्यासिद्धेरतिदेशवैयर्थ्यापत्तेश्च । स्ववदित्येव सिद्धे नञन्यपदस्य च वैयर्थ्यापत्तेश्च । यत्किंचिदन्यग्रहणे दामलिडित्यत्रेगुपधेति कप्रत्ययान्तप्रकृतिकण्यन्ते स्वभिन्नान्यापि भावभिन्नवहुव्रीहिधर्मस्य बहुव्रीहित्वस्यातिदेशेन पूर्वपदप्रकृतिस्वरापत्तेश्चेति भावः । अनुपपादनादिति । अतएव वासुदेववाचकादशब्दाद् द्वितीयैकवचने ऽमि पूर्वरूपे ऽमित्यादौ सुपिचेति दीर्घोनेति भावः । नन्वर्द्धस्यान्यथात्वे ऽप्येतन्न्यायप्रवृत्तौ न दोषः । अमित्यादौ सुप्संज्ञायाः परिच्छिन्नपरिमाणनिष्ठत्वादत आह । किञ्चेति । न्यूने सोरुकारेत्सञ्ज्ञालोपयो राम इत्यादौ, अधिके ऽवादेशे भवतीत्यादौ । तदभावादिति । अत एव सजुष्शब्दाण्णिचि तदन्तात्क्विपि टिलोपणिलोपयोः सगित्यस्य ससजुषोरुरिति रुत्वं नेति भावः । ननु राजकीयशब्दाण्णिचि क्विपि टिलोपे णिलोपे पुनर्णिचि क्विपि टिलोपे णिलोपे बहुशब्दराजकूशब्दयोर्बहुव्रीहौ स्त्रिया अन्यपदार्थत्वेन बहुराजगित्यादौ डाप्स्यान्न्यूनाधिकत्वाभावादत आह । न्यूनाधिकत्वंचेति । स्थानिवद्भावेनेति । स्थानिसदृशभावेनान्तादिव-

चेत्यनेनैकादेशस्य परादिवत्त्वादित्यर्थः। स्थानिवत्त्वं परादिवत्त्वम्। ननु तिङन्ते षत्वमिष्यत एवेत्यत आह। न्याय्येनचेति। तस्य न्याय्यत्वं च लाघवादिति भावः। शास्त्रीयवदतिदेशबोधनादिति। सामान्यापेक्षज्ञापकमिति भावः। अत एव वासुदेववाचकेनाशब्देनाङो ऽव्ययीभावे एकादेशे नपुंसकह्रस्वे अआमित्यत्रानाङिति निषेधो भवति। नन्वेवं परादिवत्त्वेनाङ्भिन्नत्वं तु नाशास्त्रीयत्वादिति निपात एकेति सूत्रस्थस्वग्रन्थविरोध इति चेन्न। ज्ञापकेनातिदेशस्य पर्युदासलभ्याशास्त्रीये कार्ये प्रवृत्तावप्यशास्त्रीयधर्मस्य तेनानतिदेशात्। तस्य। अनिष्टायामित्यस्य सामर्थ्यात्प्रसज्यप्रतिषेध एव तत्र कल्प्यत इति भावः। ननु लक्ष्यानुसारो लक्षणचक्षुषामयुक्तोऽत आह। केचित्त्विति। तेनेति। आग्निः करोतीत्यादौ विसर्गस्य प्रत्ययत्वेन षत्वाभावायावश्यकेन तेनेत्यर्थः। एवंच। अस्य न्यायस्य लौकिकत्वे च। अशास्त्रीयस्यापिधर्मस्येति। यौष्माकीण इत्यादौ यस्माद्विहितस्तत्त्वस्येत्यर्थः। क्वचिदिति। नायक इत्यादावित्यर्थः। लक्ष्यानुसारेण न्यायानाश्रयणमयुक्तमत आह। नपदान्तेतिसूत्रेइति। ननु वरेग्रहणेन यङो ऽकारस्य सांभावनिकप्रत्ययत्वाश्रयणेपि यकारस्य तथात्वे मानाभावादुवङ् न स्यादत आह। यणिचेति। अतएवेति। अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मस्याभावाल्लौकिकन्यायाश्रयणाच्चैवेत्यर्थः। पूर्वान्तत्वेनप्रत्ययान्ताभिन्नत्वादिति। तत्स्थानापन्न इति न्यायेनाशास्त्रीयस्याप्यतिदेशादित्यर्थः। अमित्यादौ परादिवत्त्वेनाङ्भिन्नत्वं त्वत्र पक्षे ऽनित्यत्वान्नातिदिश्यत इति भावः। नन्वेवं गाङ्कुटादिभ्य इति सूत्रस्थभाष्यविरोधो ऽत आह। यत्त्विति। उपायान्तरमिति। अतिदिश्यमानेत्यपेक्षयोपायान्तरमित्यर्थः। विधिग्रहणादिति। तत्सामर्थ्याद्विशेष्यतया विशेषणतया वा अल आश्रयणं न तु प्रधान्येनैवेत्यर्थ इति भावः। यत्राविधाविति। स्थान्यादेशभावाविधावित्यर्थः। शब्दतइति। स्थान्यादेशविधायके इत्यादेः। एवं चार्थतो ऽलाश्रयणे ऽपि न दोष इति भावः। अत्र प्रमाणं "विशिष्टं ह्येषो ऽनलमाश्रयते इटं नामेति" प्रकृतसूत्रस्थं वृक्षस्तत्रेत्यत्राल्विधित्वं पयस्वित्यत्रानल्विधित्वमिति वैषम्यप्रतिपादनपरं भोभगो इति सूत्रस्थं च भाष्यमिति बोध्यम्। विशेषातिदेशोपीति। तत्फलं तु परिमृज्येत्यत्र ल्यपि कित्त्वाद् गुणवृद्धिनिषेधः। उपस्थितधर्मैः। शब्दोपस्थितधर्मैरित्यर्थः। तद्व्यापकेति। उपस्थितविशेषधर्मानुमितधर्मैरित्यर्थः। विध्याकाङ्क्षापूरणेसतीति। विधीनां कृत्वातोसुन्कसुन इत्यादीनां याका-

ङ्क्षातिदेशवाक्यस्य तस्याः पूरणे सतीत्यर्थः। विधिशब्दात्कर्मणि षष्ठीति भावः। न चोभयप्राप्ताविति नियमात्कर्त्तरि षष्ठी न स्यात्कर्मणिचेति निषेधात्षष्ठीसमासोपि न स्यादिति वाच्यम्। स्त्रीप्रत्यययोरकाकारयोर्नियमाभावात्। ननु युष्मादित्यत्रादादेशे बहुवचने झल्येदित्येत्त्ववारणाय विशेषणतयाल्लाश्रयणे ऽल्विधिसंपादने विधिग्रहणं चरितार्थमत आह। हलादीति। लिङ्गादिति। सेट्क्त्वो ऽकित्त्वस्य क्त्वान्वाप्यत्वेन स्थानिवद्भावप्राप्तेरिति भावः। ङिद्वादेशाइति। ङितो लस्यादेशा इत्यर्थः। तेन रमायामित्यादावामोङित्त्वाद्याडादिसिद्धिरिति भावः। सानुबन्धकादेशइति। सानुबन्धके आदेशे इत्यर्थः। तेनाचिनवमित्यादौ मिपो निरनुबन्धके ऽमि स्थानिवत्त्वेन पित्त्वाद् गुणादिसिद्धिः। इत्कार्याभावइति। स्थान्यवयवनिमित्तकं स्थानिवद्भावेन यत्कार्यं तस्याभावज्ञापकतेत्यर्थः। तिबाद्यादेशेष्विति। तिप्सिप्मिवादेशेषु णलथलम्स्वित्यर्थः। सार्वधातुकादेशइति। सार्वधातुकस्यादेशे इत्यर्थः। अन्यथा। अनुबन्धकार्ये ऽनल्विधाविति निषेधस्वीकारे। ननु ज्ञापकान्येतानि भाष्ये दूषितानीति तत्रानल्विधाविति निषेधो ऽस्त्वित्यत आह। तिबाद्यादेशेष्विति। आदिना ल्यपो ऽपि संग्रहः। पित्त्वादीति। आदिना कित्त्वम्। असिद्धेश्चेति। चेन नल्यपीत्यस्य शिड्ग्रहणस्य च ज्ञापकत्वसंग्रहो बोध्यः। अचःपरस्मिन्निति। तदनुरोधादिति। न तु षष्ठीस्थाने इत्यस्य प्रवृत्तिर्गुणानां च परार्थत्वादिति न्यायादिति भावः। अतएवेति। नाग्लोपीति सूत्रस्थभाष्यप्रामाण्यादिति भावः। ननु परस्मिन्नित्यस्यापि सूत्रे श्रवणमत आह। व्याख्यानादिति। किरतौ लवने इत्यादिनिर्देशादचः पूर्वत्त्वविज्ञानादिति वार्तिकोक्तेश्चेति भावः। द्वितीयार्थे फलमाह। अतएवेति। प्रमाणमाह। अतएव नपदान्तसूत्रेइति। विधेयस्याभावादिति। पञ्चेन्द्र इत्यत्र यस्येति लोपस्तु न स्थानिवद्भावप्रत्ययलक्षणयोरुभयोरपि नल्लुमतेति निषेधस्वीकारादिति भावः। उपादानेइति। इदं सप्तम्यन्तम्। मानाभावादिति। उत्तरस्येत्यंशविकला तस्मादित्युत्तरस्येति तु न प्रवर्त्तते गुणानां चेति न्यायादिति भावः। ननु गुणः कृतात्मसंस्कारः प्रधानस्य महते उपकाराय भवतीति न्यायोप्यस्ति। अत एवाङ्गसंज्ञासूत्रे तस्मिन्निति परिभाषा प्रवर्तते। एवं चानेन न्यायेन प्रकृतपूर्वत्त्वस्यान्यवहितस्यैव ग्रहणं स्यादत आह। स्वरेनिषेधाच्चेति। हल्स्वरप्राप्ताविति तु स्वरे

कर्तव्ये एव न तु स्थानिवद्भावे कर्तव्ये ऽपीति भावः । नपदान्त । वतिघटितान्यातिदेशानामिति । स्थानिवदादेशो , ऽन्तादिवच्च, आद्यन्तवद्, एकदेशविकृतमनन्यवत्,प्रत्ययलोपे, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीत्येतेषामित्यर्थः । ननु प्रत्ययलोपे प्रातिपदिकग्रहणे इत्यनयोर्वतिघटितत्वाभाव इति चेन्न । प्रत्ययलोपे इत्यत्र स्थानिवदित्यनुवृत्तेः, प्रातिपदिकग्रहणे इत्यस्य प्रातिपदिकवल्लिङ्गविशिष्टमित्येवं स्वरूपज्ञापनाच्च । रामइत्यादाविति । आदिना वस्नसित्यादि । विसर्गादीति । आदिना रुत्वादि । उत्वेचनस्थानिवदिति । ननु रोः कथं स्थानिभूतादचः पूर्वत्वम् ? । स्थानिवत्सूत्रदृष्टया रोरसिद्धत्वेन तद्बुध्या सकार एवोत्त्वप्रवृत्तेस्तत्स्थानापन्नस्तद्धर्मेमिति न्यायाच्च । परपद्स्थेति । तेन भवार्थकाणन्तमाहिषाण्णाचि क्विपि माहिष् ददते इत्यत्र झलांजशोन्ते इति जश्त्वे स्थानिवत्त्वं भवत्येवेति भावः । पदचरमावयवेति । अस्य तद्धितनिमित्तकलोपपरकेत्यादिः । तेन पिपठिषतेः क्विपि पिपठीरित्यस्य सिद्धिः क्वौ लुप्तमिति निषेधाद्वा तत्सिद्धिरिति भावः । अतएवेति । नपदान्तेति, पूर्वत्रासिद्ध इति च निषेधाभावेन स्थानिवत्त्वादेवेत्यर्थः । चर्संनिहितस्यैवेति । चर्संनिहितस्य परनिमित्तकस्यैवेत्यर्थः । औचित्यादिति । साहचर्यानाश्रयणे मानाभावादिति भावः । वक्ष्यतइति । वतिघटितत्वाभावाच्च पूर्वोक्तज्ञापकादपि त्रिपाद्यां न प्रवर्तत इत्यपि बोध्यम् । एवमेव जातिपक्षे ऋऌवर्णयोरित्यनेन समानजात्यतिदेशविधानात्तस्य वतिघटितत्वाभावात् त्रिपाद्यामप्रवृत्तिस्तेन कुऌप्तशिखेत्यत्रानृत इति निषेधो नेति प्रागुक्तं न विस्मर्तव्यम् । अत्रेदमिति । उत्तरपदत्वे चेत्यस्य उत्तरपदस्य कार्यित्वे एव प्रवृत्तिरितीत्यत्र, गतिकारकेत्यस्यानित्यत्वे च पदे इत्यस्य पदत्वयोग्योपलक्षणत्वे चेत्यर्थः । इदम्भाष्यमपीति । पदेऽन्त इति सप्तमीसमासपरं प्रकृतसूत्रस्थभाष्यमपीत्यर्थः । अपिना षात्पदान्तात्, नलुमताङ्गस्य, ङमो ह्रस्वात्, उञि च पदे इति सूत्रस्थभाष्यस्य च ग्रहणम् । साधकः । इन्द्रेचेत्यादाववङादिसाधकः । प्रतिबन्धकश्चेति । एषोयन्नित्यादावुत्वादिप्रतिबन्धकश्चेत्यर्थः । अदर्शनं लोपः । ननु प्रासादात्प्रेक्षते इत्यादौ शास्त्रतो ऽप्रसङ्गो ऽत आह । अर्थतोवेति । प्रत्ययलोपे इति । लिट्धुगित्यादौ प्रत्ययलोपविषये इत्यर्थः । लोपविधानेनेति । हल्ङ्याब्भ्य इत्यादिनेति भावः । तस्येति । स्वादेः प्रत्ययस्येत्यर्थः । व्याख्यानादिति । लोपनं लोप इत्यर्थसञ्ज्ञानरूपादित्यर्थः । तुगापत्तिरिति । ह्रस्वस्य

पितीति तुगापत्तिरित्यर्थः । ननु प्रत्ययग्रहण इति परिभाषया यस्मात्स विहितस्त-दादेरित्यस्योपस्थित्या न तुगापत्तिरिति चेन्न । त्रपेः क्विपि सौ हल्ङ्यादिलोपे जश्त्वे वावसान इति चर्त्वे तत उ इति निपातयोगे यस्मात्स विहितस्तदादेरपि स-त्त्वात् । विषयत्वाच्चेति । हेतावत्र चशब्द इति भावः । परएवेति । तेन पुत्त्रया-दिनीत्यादौ न निषेध इति भावः । लुप्तसप्तमीकमिति । सुपां सुलुगित्यनेनेकार-लुप्ता अदृष्टा सप्तमी यस्मात्तदित्यर्थः । एतेनेदूतौचेति प्रगृह्यत्वेन यण् दुर्लभ इत्य-पास्तम् । नन्वेतादृशक्लिष्टकल्पनापेक्षया इन्प्रकृतिकसप्तम्यन्तस्यैव सूत्रे निर्देशो ऽस्तु । एवं च स्त्रियामपि ङीप्प्रकृतिभागमादाय भविष्यतीत्यत आह । अतएवेति । पुंसि व्यावृत्त्यर्थं स्त्रीलिङ्गस्य ङीबन्तस्यैव सूत्रे ग्रहणमिति भावः । आदिङ्शब्दप्रकृ-तिकसप्तम्यन्तस्य सूत्रे निर्देशेपि न पुंस्यतिव्याप्तिरित्याह । ईदृशाक्रोशस्येति । प्रा-प्तद्वित्वस्यैवेति । न त्वच इत्यस्य, नेत्यस्य चाननुवृत्त्या इन्द्रशब्दे दस्य राष्ट्रशब्दे रेफस्य चाप्राप्तद्वित्वस्य विधायकमिति भावः । ननु श्रुतत्वाद्रहाभ्यामित्यचो विशेष-णमच इति यर इत्यस्य इत्येव किं नेत्यत आह । व्याख्यानादिति । श्रुतक्रमरू-पाद्यर इति त्वागन्तूनामन्ते निवेश इति न्यायेन रहाभ्यामित्यस्य विशेष्य-मिति भावः अनुवादे परिभाषानुपस्थितेरत्र परशब्दाध्याहार इति प्रकाशाद्युक्तं खण्डयति । तस्मादितीति । विधौ परिभाषोपतिष्ठते इति न्यायस्त्विको गुणवृद्धी, अचश्चेति परिभाषाद्वयाविषय एवेति भावः । भाष्यसम्मतेति । भाष्ये शश्छोटीत्यु-त्तरमभ्यासे चर्चेत्यस्योपादानादिति भावः । हार्य्येति । हय गतौ ऋहलोर्ण्यत् । अवावाविति । मूलमतेनेदम् । स्वमते ओदौतोरिति वार्त्तिकस्यावश्यकत्वात्स्थानेन्त-तमपरिभाषया वान्त इति यथाश्रुतेपि अदोषादिति भावः । संवृतावर्ण इति । भाष्यप्रामाण्यादत्र अ अ इत्यस्य नासिद्धत्वमिति भावः । तदुपरागादिति । तत्सां-निध्यादित्यर्थः । तस्मान्नुडचीत्याद्यर्थमावश्यिकयेति । अनेनात्रानावश्यकत्वं सूचि-तम् । तथा हि । यकाररूपस्य यकारान्तस्य वा प्रत्ययस्यासम्भवात्प्रत्यये विद्य-माने यकारे इत्यर्थेनापीष्टसिद्धिरिति । ननु वकारप्रश्लेषाभावे प्रकृते लक्ष्यासिद्धि-रत आह । किञ्चेति । भङ्गापत्तेरिति । अध्वपरिमाणे गम्यमाने यूतौ परेगोशब्द-स्यावादेश इति तद्वार्तिकार्थस्तत्र वलोपे ऽध्वपरिमाणस्यागम्यमानत्वात्तत्र वलोपपक्षे ऽवादेशस्यैवाभावेन न लोप इति भावः । उक्तार्थप्रसिद्धिमाह । यथेति । णत्वस्या-

भावइति । तत्रापि पूर्वपदस्थान्निमित्तात्परस्य नस्य णत्वं स्यात्सञ्ज्ञायां कृतणत्वेन चेत्सञ्ज्ञायां गम्यमानायामित्यर्थ इति भावः । एवं च संज्ञापदघटितसूत्राणामेतादृशार्थकरणेन फलितार्थकथनं तत्रत्यसञ्ज्ञात्वभङ्गापत्तेरिति संस्कृतमिति बोध्यम् । एतेन सम्राडित्यत्र संज्ञात्वभङ्गापत्तेरेवानुस्वाराभावे तद्बाधनार्थं मोराजीति सूत्रं व्यर्थमित्यपास्तम् । अनुस्वारविधायकसूत्रस्य संज्ञापदघटितत्वाभावात्सञ्ज्ञात्वभङ्गापत्तेर्न कार्यमित्यपूर्ववचनाभावाच्च । धातोस्तन्निमित्तस्यैव । नयकीति तु न सूत्रितम् । भुवः क्विबन्ताद्गवादिभ्यो यति ओर्गुणे भोयमित्यादौ पूर्वसूत्रेणावादेशापत्तेः । यथान्यासे तु नायं दोषः । तथा हि धातोस्तन्निमित्तस्यैवेत्यस्यारम्भाद्वान्तोयीत्यत्राधात्ववयवयोरोदौतोर्ग्रहणमिति भोयमित्यादौ न तत्प्राप्तिः । धातोरित्यस्य तु धातोः कार्यमुच्यमानमिति परिभाषया धातुशब्दमुच्चार्यविहिते यादौ प्रत्यये परे तन्निमित्तयोर्धात्ववयवयोरोदौतोर्वान्तादेश इत्यर्थाद्भोयमित्यादावप्राप्तिरिति भावः । ननु वान्त इत्यत्रैतदारम्भाद्धातुशब्दमुच्चार्य विहितयादिप्रत्ययपरकधात्व यवभिन्नयोरोदौतोरित्येवार्थाद्भोयमित्यादौ तत्प्राप्तिर्दुर्वारेति चेन्न । तत्रासति बाधके इति न्यायेन नयकीत्येव सिद्धे धातोस्तन्निमित्तस्येत्यारम्भेण च धात्ववयवभिन्नयोरित्येव वान्त इत्यत्रार्थादिति दिक् । बहिरङ्गत्वादिति । पदद्वयाश्रितत्वेनेति भावः । आडागमेवृद्धिरिति । अत्र वृद्धेरप्येकपदाश्रयत्वेन नावादेशाद्बहिरङ्गत्वम् । ननु पूर्वोपस्थितनिमित्तकत्वेनावादेशस्यान्तरङ्गत्वं यादिप्रत्ययनिमित्तकत्वाद्वृद्धेः पश्चादुपस्थितसंप्रसारणनिमित्तकत्वाद्बहिरङ्गत्वम् । अतएव क्क्ङितिचेति सूत्रे क्क्ङिति परे इको गुणवृद्धी नेति तत्सूत्रार्थे ओयते इत्यत्र निषेधमाशङ्क्याऽन्तरङ्गःप्रतिषेधो बहिरङ्गा वृद्धिरित्युक्तं संगच्छते इति चेन्न । समकालप्राप्तिकान्तरङ्गविषय एव पूर्वोपस्थितनिमित्तकस्यान्तरङ्गत्वं पश्चादुपस्थितनिमित्तकस्य बहिरङ्गत्वमिति स्वीकारादिति बोध्यम् । व्याख्यानात् । तदर्थे इति विशेषणसामर्थ्यरूपात् । तदिति । तच्छब्देनेत्यर्थः । तत्रेति । वृक्षव् करोतीत्यत्रेत्यर्थः । अप्रवृत्तौ बीजमिति । नपदान्तेति निषेधाप्रवृत्तौ बीजंकारणमित्यर्थः । नन्वेवं वेतस्वानित्यत्र पदस्य चरमावयवे नेत्यर्थेपि निषेधाप्रवृत्त्येष्टे सिद्धे पदेऽन्त इति सप्तमीसमासाश्रयेण वा निषेधवारणपरस्य नपदान्तसूत्रस्थभाष्यस्यासंगतिरिति चेन्न । पदान्तस्य स्थाने विधौ नेत्यर्थे पदान्तस्यानूद्यमानत्वेनान्योन्याश्रयेपि पदचरमावयवे

कर्तव्ये नेत्यर्थे पदचरमावयवस्य क्वापि पूर्वं सिद्धत्वाभावेन भाविन एव ग्रहणेना-न्योन्याश्रयाभावात् । ज्ञापकस्येति । रण् च इश्च तयोरण्योरित्यादौ साक्षान्ङमु-ट्प्रापकस्य, नौरिव ओ वासुदेवोस्य स नावः स इवाचरन्तौ नावावित्यादौ पदत्व-द्वारालोपप्रापकस्य वेत्यर्थः । प्रतिबन्धकस्यवेति । राज्ञ इत्यादौ साक्षाच् श्चुत्वस्य, हरितमाचष्टे हरिदित्यादौ पदत्वद्वारा जश्त्वस्य च प्रतिबन्धकस्य वेत्यर्थः । वा-र्तिकाच्चेति । चेन क्वावुपसंख्यानमिति वार्तिकं लोपोव्योरिति सूत्रस्थवकारारम्भप्र-त्याख्यानयोरेकवाक्यतया सार्वत्रिकस्य संग्रहो बोध्यः । तस्यलक्षणयेति । स्थान-पदस्य तत्सूत्रे तात्वादिस्थानपरत्वस्योक्तत्वादिति भावः । भाष्योक्तरीत्येति । तत्र ह्यन्तशब्दस्य समीपवाचित्वं नावयववाचित्वं हल इगवयवत्वाभावादित्युक्त-मिति भावः । अणमनूद्येति । लक्ष्ये प्रवृत्तमणमनूद्येत्यर्थः । न तु तत्तद्विध्येकवा-क्यतया ऽनेन परत्वविधानमिति भावः । अत्रपक्षइति । अणमनूद्य रपरत्वं विधीयत इति पक्षे इत्यर्थः । व्यवस्थासंभवादिति । अचि विभाषेति गिरतेर्विकल्पेन लत्व-विधानाज्ज्ञापकादित्यर्थः । इत्यादावेति । आदिना वृद्धिरादैजदेङ्गुण इत्यनयो-र्भ्रुवामिन्मातुरुदित्यस्य च ग्रहणं बोध्यम् । दोषापत्तेरिति । तत्र तत्रादेशद्वयो-च्चारणस्य गौरवात्सर्वादेशरूपदोषस्य चापत्तेरित्यर्थः । भाष्यसंमताष्टाध्यायीपाठे आह । वावसानइत्यतोवेति । इदमिति । लोपवैकल्पिकत्वमित्यर्थः । गुणेन निषे-धानित्यत्वस्य भाष्ये ऽनुक्तत्वात्समासो न स्यादत आह । पृथक्पदमिति । इति कश्चिदिति । अत्रारुचिबीजं तु बुद्धिमान्द्यमित्यादाविव शाकपार्थिवादित्वात्संबन्धिश-ब्दस्य लोपात्षष्ठीसमासेनापि सिद्धिरिति दिक् । नन्वत्रोठ्शब्देनोठ चेति धातोरपि ग्रहणं स्यादत आह । आदेशएवेति । व्याख्यानादिति । अल्पाच्तरमिति तस्य पूर्व-निपाताकरणरूपादादेशस्यैव ग्रहणे त्वभ्यर्हितं चेत्येत्येधत्योरेव पूर्वनिपातः । साहचर्यं तु क्त्वोर्थग्रहणेनानित्यमिति भावः । ननु आ अवतीत्यौर्जनस्य और्जनौरित्यत्र तत्संभवादाह । एत्येधत्योरितीति । इणेवेति । न तु वीगतीत्यत्र प्राश्लिष्टोपीति भावः । प्रसिद्धत्वादिति । एवं च शीघ्रोपस्थितिकत्वेन प्रतिपदोक्तत्वादिण एव ग्रहणमिति भावः । उपरञ्जकतयेति । स्वरूपबोधायेत्यर्थः । ननु ण्यन्तस्य शब्दा-न्तरत्वात्प्रकृतिभागस्य जहत्स्वार्थिकत्वेनानर्थकत्वाच्चोपैधयते इत्यादौ वृद्धिर्न स्यादत आह । उपैधयत इत्यादावपीति । एधूरूपत्वादिति । "जहत्स्वार्था तु तत्रैव

यत्र रूढिर्विरोधिनी" इति हर्युक्तेरत्राजहत्स्वार्थवृत्तेरेव सत्त्वादिति भावः । नन्वेवमपि सर्वादेशोऽत्र स्यादत आह । किंचेति । नदोषइति । न सर्वादेशरूपदोष इत्यर्थः । ननु पूर्वं धातुरुपसर्गेण युज्यते इत्याद्गुणस्य प्राप्तेः पररूपस्य प्राप्तेरित्यसंगतमत आह । पूर्वंधातुःसाधनेनेति । सुखार्त इत्यारम्य ध्वनितमिदमित्यन्तो ग्रन्थो न शेखरस्थः । सर्वपुस्तकेष्वदर्शनात् । निर्देशादिति प्रतीकस्थवक्ष्यमाणस्वोक्त्या सह विरोधाच्च । वासुपीति । नत्वाद्धिरिति । वा सुपीत्यस्यापवादत्वात् । अत्र सूत्रे ऋकारादावपुग्धाताविर्त्यर्थस्य तत्राप्राप्तिरिति भावः । व्याख्यानादिति । अचीति अनुवर्तते तस्य ऋतीति विशेषणकरणादित्यर्थः । अन्त्यादचोरिति । अलोन्त्यस्यादेः परस्येति परिभाषाभ्यामित्यर्थः । ननु नाम्रेडितस्येति निषेधारम्भेणाल इत्येतद्घटितपरिभाषा पूर्वपरयोरित्याधिकारे न प्रवर्त्तत इति समान्यापेक्षं ज्ञापकमिति मते सर्वादेशः स्यादत आह । उपसर्गावयवाकारादिति । अन्तादिवच्च । पृथगवस्थिताभ्यामिति । तृतीयान्तस्य बोध्यहेतुत्वविशिष्टस्य ये व्यवहारा इत्यत्रान्वयः । ते च व्यवहाराः प्रत्यासत्त्या पूर्वपरशब्दोपस्थितसमुदायाश्रिता एव गृह्यन्ते तदाह । नन्विति । औङ्त्वस्यसुप्त्वेइति । द्वित्वरूपार्थतद्वाचकौशब्दयोर्यः समुदायस्तन्निष्ठत्वात्तस्येति भावः । दीर्घश्चेनेति । दैत्यारिः श्रीश इत्यादिसिध्यर्थमइउणित्यादिषु तुल्यास्येति निर्देशेनार्थरहितानामिकारादीनां निर्देशेनाप्यत्वादेर्वर्णमात्रवृत्तित्वेनार्थघटितसमुदायधर्मत्वाभावादिति भावः । तत्र मानमाह । अतएवेति । ननु स्थानिवत्सूत्रेण सिद्धे इदं व्यर्थमत आह । क्षीरपेणेत्यादाविति । ननूत्तरपदत्वमात्रं स्थानिवत्त्वेनातिदिश्यते एकाच्त्वं तु स्वतः सिद्धमेवात आह । किंचैकादेशइति । इतिदिगिति । दिगर्थस्तु स्थानिवदादेश इत्यत्रोभयत आश्रणे न स्थानिवदिति पठ्यते इति । एवं च तस्यैवायं मध्येऽपवाद इति न्यायेन निषेधो नत्वचः परस्मिन्नित्यस्यापीति अभीयादित्यादौ पञ्चमीसमासस्य सत्त्वेनेत्यर्थः । पूर्वोक्तदूषणमिति बोध्यम् । समानमिति । एवं चान्तरङ्गपरिभाषया निर्देशस्य प्राच्छेतीत्यादिप्रयोगाणां चोपपत्तिरिति भावः । ननु गुणवृद्ध्योः प्रवृत्तिवेलायां पूर्वोत्तरयोः पदत्वेन तयोः पदद्वयाश्रयत्वेपि विसर्गप्रवृत्तिसमये पूर्वभागस्य विसर्गे कर्त्तव्ये पूर्वान्तवद्भावेन पदत्वे ऽप्युत्तरस्य स्वतः पदत्वाभावात्कार्यस्य शास्त्रीयस्याभावेन फलाभावेन चातिदेशेन पदत्वाभावाच्च न विसर्गस्य

पदद्वयाश्रितत्वमत आह । किंचेति । ननु प्रगत ऋश्यः प्रश्र्य इत्यत्र वृद्धिर्दु-र्वारैवेत्यत आह । यदर्थेति । धात्वर्थेत्यर्थः । तस्यैवेति । धातुं प्रत्येवेत्यर्थः । एवं च ऋश्यशब्दस्य धातुत्वाभावान्न तस्य कार्ये कर्तव्ये उपसर्गत्वं प्रादीनामिति भावः । एतेन उपसर्गाः क्रिययेत्येव सिद्धे योगग्रहण सामर्थ्यात्सिद्धम् । नन्वेव-मपि प्रगत ऋद्धः प्रर्ध इत्यादौ वृद्धिर्दुर्वारेत्यत आह । प्रकृतेचेति । ननु सुबन्ते धातावित्येवार्थः कुतो नेत्यत आह । तुल्यस्येति । नन्वेवमपि सुबन्तावयवे धाता-वित्येवार्थः कुतो नेत्यत आह । शास्त्रेइति । तेन ऋच्छेः क्विबन्तात्सुपि हल्-ङ्यादिलोपे प्रार्ड् इति सुबन्ते, ऋषभपुत्रमाचष्टे प्रार्षभपुत्रयतीति सुबन्तावयवके च धातौ पूर्वेण नित्यमेव वृद्धिर्न त्वनेन विकल्प इति भावः । धातावित्यनुवृत्ते-रिति । उपसर्गादित्यस्य संवन्धात्तेन च धातावित्यस्याक्षेपादिति भावः । गम-कत्वादिति । नित्यसापेक्षत्वादित्यर्थः । इतशब्दस्यलोपइति । तकारस्य जश्त्वं तु न गतिकारकोपपदानां सुबुत्पत्तेः पूर्वं समासेन तस्य पदान्तत्वाभावादिति भावः । वातछोपइति । अत्र पक्षे सुप्सुपेति समास इति भावः । ननु शकन्ध्वादित्वात्पत-च्छब्दस्य पररूपमेवात्र कुतो नेत्यत आह । गोनर्ददेशे इत्यादिना । तत्र प्रमा-णमाह । ऐतिहयादिति । एवं च नेदमस्य वार्त्तिकस्योदाहरणमिति भावः । ओत्वोष्ठयोःसमासेवा । ननु समर्थपरिभाषाया अत्रोपस्थित्या समास एवैतस्य प्रवृत्तौ समास इति व्यर्थमत आह । समर्थपरिभाषेति । ननु समासेऽङ्गुलेरित्यत्र ऋते च तृतीयासमासे इत्यत्र च समासग्रहणेन सुबन्तेन तद्व्याप्यत्वेन च यत्रो-द्देश्यत्वं तत्रैव समर्थपरिभाषा प्रवर्त्तते ज्ञापकसाजात्यान्न तु यत्र पदत्वेनोद्देश्यत्वं तत्रापीत्यत आह । पदविधिरितिसूत्रस्वारस्येनेति । पदत्वेनेति । उपपदमतिङ् कर्मण्यणित्यादौ उपपदमिति महासंज्ञाकरणेन समीपोच्चारितं पदमुपपदमित्यर्थात् । सुबन्तत्वेन वेति वाशब्दस्य समुच्चयार्थत्वात्सुबन्तत्वव्याप्येन तिङन्तत्वेन चेत्यर्थः । सुबन्तेन सुप्सुपेत्यादौ तद्व्याप्येन कर्तृकरणेकृतेत्यादौ तिङन्तत्वेनाख्यातमाख्याते-नेत्यादौ तिङश्चेत्यादौ च। ननु पदविधिरिति सूत्रस्वरसेन पदत्त्वेन यत्र सात्रादुद्दे-श्यता तत्रैव परिभाषाप्रवृत्तिः स्यान्न तु यत्र सुबन्तत्वादिना तत्रेति चेन्न। पारेमध्ये इत्यत्र वाग्रहणसामर्थ्येन पदत्वप्रयोजकेनोद्देश्यत्वेपि तत्प्रवृत्तिज्ञापनात् । पदत्वा-भावादिति । ओत्वोष्ठाङ्गुलिसङ्गादिमात्रस्य पदत्त्वेन तत्प्रयोजकत्वेन सुबन्तत्वा-

दिना वोद्देश्यत्वाभावादित्यर्थः । चस्तु हेताविति भावः । अत एवोपसर्गाद्धतीत्यादौ परिभाषा नोपतिष्ठत इति दिक् । ननु लक्षणैकचक्षुषो लक्ष्यानुरोधो ऽनुचितो ऽत आह । अन्यत्रेति । मयड्वैतयोरितिसूत्रे भाष्ये स्वाम्पि सेद्रुष इत्यादिप्रयोगे चेत्यर्थः । तत्याच्छब्दइति । तस्यानुकरणे एवाच्छब्दः संभवति न तु तद्रूपानुकरणे इत्यर्थः । एवं चाव्यक्तस्यानुकरणमिति षष्ठीसमासो न तु कर्मधारय इति भावः । अनुकरणग्रहणं तु भग्नदन्ताद्युच्चारिताव्यक्तानुकार्ये ऽच्छब्दे पररूपव्यावृत्त्यर्थमित्यलम् । नन्वत इत्युच्यमाने स्वरूपग्रहणायातोगुणे इत्यनुवर्त्तमाने पुनरच्छब्दग्रहणरूपज्ञापकाश्रयणे प्रक्रियागौरवाद्वे इत्येव सिद्धौ पृच्छति । अतइतिकिमिति । इतिव्यर्थमिति । वैचित्र्यार्थम् । प्रियताद्धिता दाक्षिणात्या इति बोधनद्वारा स्पष्टार्थमित्यर्थः । ननु वाक्यभेदेनान्त्यमात्रस्य वटगित्यादीनामपि विकल्पेन पररूपप्रवृत्त्यर्थमित्येव किं नेत्यत आह । फलकल्पनेति । अन्तग्रहणं झलीतिनिवृत्त्यर्थमिति । दधस्तथोश्चेति सूत्रस्थतथोरित्यस्य प्रत्याख्यानाय झषस्तथोर्धोध इत्यत्रत्याध इति प्रत्याख्यानाय च भाष्ये दध इति सूत्रे झलां जशोन्त इत्यत्र जश इति योगं विभज्य दध इति झष इति च तत्रानुवर्त्य झष इति सूत्रे चानुवर्तितस्य झलीत्यस्य झलामिति सूत्रनिवृत्त्यर्थमन्तग्रहणमित्यर्थः । ननु कृतेप्यन्तग्रहणे पदस्यान्ते विद्यमानानां झलिं परे इत्यर्थः कुतो नेति चेन्न । झलन्तस्य पदस्येत्येव सिद्धेऽन्तग्रहणसामर्थ्याज्झलीत्यस्यासंबन्ध इति भावः । लकारवत्तान्तर्येणेति । लकारो विद्यते यस्मिन् लकारो रेफहल्रूपवाति समुदाये सलकारो ऽर्श आद्यजन्तः स विद्यते यस्मिन्हलात्मके समुदाये लकारवतो भावो लकारवत्ता तया हल्द्वयवत्तया च यदान्तर्यं तेनेत्यर्थः । अभितःकॢप्तत्वेनेति । परत्राज्भक्तिस्वीकारफलं तु कर्त्ता इत्यत्र क्लृप्तये इत्यत्र पकारस्य यणोमय इति द्वित्वं च नेति बोध्यम् । पूर्वसाहचर्यादिति । पूर्वसादृश्यादित्यर्थः । वार्तिकद्वयप्रवृत्तौ विशेषमाह । अत्रेति । अत एव व्यवस्थया साधुत्वस्वीकारादेवेत्यत्र प्रमाणमाह । अतएवेति । ननु तपरत्वेन ऋग्रहणेन च परत्र व्यवस्थायामपि पूर्वसवर्णदीर्घस्यापि ग्रहणं स्यादत आह । तुल्यास्यसूत्रेति । ऋतीत्येतद्वत इतीति । आवृत्त्या ऋत इत्यपीत्यर्थः । सिद्धाविति । अवयवस्यार्थसिद्धावित्यर्थः । वार्तिकस्य वैयर्थ्यापत्तेरिति । एतयोरइउण्सूत्रानन्तरं पाठबोधकवार्तिकस्य वैयर्थ्यापत्तेरित्यर्थः । एङः पदान्तादति ।

पदान्तात्किमिति । ङसि ङसोश्चेत्यस्यापदान्ताच्चेत् ङसिङसोरेवेति नियमार्थत्वादेवा स्य पदान्ते एव प्रवृत्त्या पदान्तादिति व्यर्थमिति प्रश्नः । उत्तरमाह । भवतीति । सुपि ङसिङसोरेवेत्यपि नियमसंभवादङ्गातिप्रसङ्गः स्यादिति भावः । अनित्यत्वा-दिति । हलो ऽनन्तरा इति निर्देशाद् गवाक्ष इति भाष्योदाहरणाच्च संनिपातपरि-भाषानित्यत्वपरिगणने एकादेशस्यापि ग्रहणादिति भावः । सामञ्जस्यमिति । प्लुतप्रगृह्या इत्यस्य प्रथमान्तत्वादित्यर्थः । नेति पाठे तु षष्ठ्यर्थे प्रथमेति कल्प्यं स्यादिति भावः । भवत्येवेति । नन्वन्तरङ्गे सवर्णदीर्घे बहिरङ्गस्य प्रकृतिभावस्या-सिद्धत्वादेवादोषे ऽज्ग्रहणं व्यर्थमिति चेन्न । विष्णो इती त्यादावप्यन्तरङ्गे ऽवा-देशे प्रकृतिभावे च बहिरङ्गप्रगृह्यत्वस्यासिद्धत्वात्प्रकृतिभावानापत्त्या संबुद्धौ शा-कल्यस्येत्यस्य वैयर्थ्येन प्रकृतिभावविषये ऽन्तरङ्गपरिभाषाया अप्रवृत्तेः । अत एव पचेते इमावित्यादौ प्रकृतिभावसिद्धिरिति दिक् । वार्त्तिकमिति । एकवचनप्रयो-गेणैकमेवेदं वार्त्तिकमिति सूचितमिति भावः । व्याख्यानादिति । ज्ञापकपरभाष्य-प्रामाण्यात्सित्साहचर्याद्वा नसमासे इति पूर्वसूत्रस्यैव निषेध इति व्याख्यानादिति भावः । भवतीति । स्मृत्युक्तं भवतीत्यर्थः । अस्यापीति । एधीत्यस्यापीत्यर्थः । स्मृतौ भवेत्यस्यार्थपरत्वाभावादिति भावः । एतेन "आयुष्मान्भव सौम्येति वाच्यो विप्रो ऽभिवादने ॥ अकारश्चास्य नाम्नो ऽन्ते वाच्यः पूर्वाक्षरः प्लुत" इति मनू-क्तेरेधीत्यनुचितमित्यपास्तम् । नामत्वात्प्राप्तइति । एवं च सर्वस्य प्लुतस्य वैक-ल्पिकत्वात्तयोर्ग्रहणं स्पष्टार्थमिति भावः । नन्वेवमपि वाक्यस्य टेरित्यधिकारादेव हैहेप्रयोगे हैहेन्तस्य वाक्यस्यटेः प्लुत इत्यर्थे ऽनन्त्ययोस्तयोर्न स्यादत आह । हैहेन्तइति । व्याख्यानाच्चेति । अनन्त्यस्य चेत्येव समुच्चये सिद्धे ऽपि प्रयोगग्रहण-सामर्थ्याद् गुर्वसंबद्धस्यैवान्त्यस्य समुच्चय इति भावः । नन्वनुदात्तं पदमित्येव पर्याये सिद्धे एकैकग्रहणं व्यर्थमत आह । अनुदात्तंपदमितित्विति । ननु प्राचा-मित्यस्य विभागेन सर्वप्लुतस्य वैकल्पिकत्वे पाणिनिः स्वमतात् प्रच्युतः स्यादत आह । भाष्येत्विति । व्यवस्थितविभाषायां प्रमाणमाह । साचेति । नन्विन्द्रेचेति सूत्रारम्भाद् भाष्यानुक्तानामपि व्यवस्थितविभाषाणामप्रामाणिकत्वमाह । अतएवेति । ननु प्रसज्यप्रतिषेधेन व्याख्याने यथाश्रुतमेवास्त्वित्यत आह । प्रसज्यप्रतिषेधेनेति । गौरवादिति । असमर्थसमासापत्तेरित्यर्थः । नन्वङ्ग इत्यादौ संबोधनार्थकशब्दस्य

निपातस्य निपात एकेति प्रगृह्यत्वे दूराद्धूत इति प्लुते ऽनेन पर्युदासपक्षे प्लुतादेश आन्तरतम्याद्दीर्घः स्यात्प्रसज्यप्रतिषेधपक्षे तु प्लुतानिषेधे ह्रस्वस्य श्रवणं स्यादिति फलमुखं गौरवं न दोषायेत्यत आह । किंचेति । वदेदिति । एवं चात्र पाठे ऽप्लुतग्रहणसामर्थ्याद्दीर्घस्यैव तत्र साधुत्वं स्यादिति भावः । ननु पर्युदासपक्षे वद्ग्रहणं व्यर्थं तत्र कृते ऽकृते वा परत्वादनेन प्रगृह्याश्रये प्रकृतिभावबोधनेन फलेविशेषाभावात्प्रसज्यप्रतिषेधे तु प्लुतस्य प्लुतसादृश्यस्य वा निषेधे प्रगृह्यप्रकृतिभावस्य सत्त्वादस्ति तत्सार्थक्यमत आह । नचेति । बाधित्वापरत्वादिति । प्रकृतिभावाप्लुतसादृश्ययोर्विरोधादिति भावः । अप्लुतवद्भावेइति । अप्लुतसादृश्य इत्यर्थः । तथा च सकृद्गतिन्यायेन प्रकृतिभावो न स्यादिति भावः । सुलभमिति । प्रगृह्याश्रयप्रकृतिभावदृष्ट्या प्लुतस्यासिद्धत्वादिति भावः । तत्त्वमिति । प्रगृह्यत्वात्प्रकृतिभावरूपं कार्यं वेत्यर्थः । निपातग्रहणाभावे ऽप्यनाङिति पर्युदासादर्थवत एवैकाचो ग्रहणात्तद्व्यर्थमिति प्रश्नः । निपातइतिकिमिति । नचैकाचोद्दे इत्यादावेकाच्पदे बहुव्रीहिः क्लृप्तत्वमत आह । व्याहरतीति । औचित्यादिति । असमर्थसमासवाक्यभेदयोरभावरूपलाघवादिति भावः । अतएव । वाक्यभेदापत्तेरेव । नन्वा अ इत्यवस्थायां सवर्णदीर्घस्य शब्दान्तरप्राप्तत्वेनानित्यत्वात्परनिमित्तत्वेन बहिरङ्गत्वे च नित्यत्वादाङ्गत्वाच्च पूर्वं नपुंसकह्रस्वे ततो दीर्घे पुनर्ह्रस्वाप्राप्त्या ऽदन्तत्वाभावेनामभावे विभक्तेर्लुकि आ इत्येव रूपमिति अमिति रूपस्यैवाभावेत आह । आदाविति । तेन आ इत एत इत्यस्य संग्रह इति बोध्यम् । स्पष्टार्थइति । स्पष्टो ऽर्थः प्रयोजनमस्य तदित्यर्थः । तत्र निपातग्रहणं मिथो इतीत्यादौ प्रगृह्यत्ववारणाय ओदित्युत्तरार्थमेकाज्ग्रहणफलमाह । स्वाङ्गेइत्यादिना । उपस्थितिरिति । गौणमुख्यन्यायश्च साक्षात्संज्ञाद्वारा वा विशिष्टरूपोपादाने एव प्रवर्त्तत इत्यर्थस्तदाह । गौणमुख्यन्यायेनेति । अव्ययसंज्ञादाविति । आदिना निपाता आद्युदात्ता इत्यस्य संग्रहः । अनित्यत्वादिति । अत्र प्रमाणं त्वोदिति सूत्रस्थोऽगोभवदिति भाष्यप्रयोग इति बोध्यम् । निपातएवेति । नतु प्रत्याहारस्तथासत्यज्ग्रहणमेव कुर्यादित्यर्थः । उञ इत्यस्य षष्ठ्यन्तत्वात्प्रगृह्यसंज्ञासंबन्धो न स्यादत आह । उञोवाचकमिति । वैयर्थ्यापत्तिश्चेति । दीर्घमुच्चारणं यस्यानुनासिकत्वविशिष्टादेशस्य तद्वैयर्थ्यापत्तिश्चेत्यर्थः । मयधातोर्ग्रहणमत्र कुतो नेत्यत

आह । व्याख्यानादिति । त्रिपाद्यां पाठकरणसामर्थ्यादित्यर्थः । सप्तमीतिकिमिति । सुबर्थे इत्येवं वक्तव्यमिति भावः । ननु वैपरीत्यं कुतो नेत्यत आह । उकारांशे-इति । नन्वीकारांशे तत्संभवात्तत्र निषेधो दुर्वार एवेत्यत आह । यर्यीत्यादिना-मिति । अनभिधानमिति । तत्रापि सरसी यदीति प्रकृतसूत्रस्थभाष्यप्रामाण्या-दिति भावः । क्रियायामेवेति । कर्तृद्वारेति भावः । बोधस्तु गौर्यधिकरणको ऽधि-श्रयणकर्त्तेति बोध्यम् । ननु संज्ञायामिति समासे प्रगृह्यत्ववारणायार्थग्रहणस्यावश्य कत्वमत आह । संज्ञायामितिवेति । अजहत्स्वार्थावृत्तिस्तु न रूढेरविरोधादिति भावः । व्याख्यानादिति । अप्रगृह्यस्येति पर्युदासेनाच एवानुनासिकत्वे सिद्धे ऽण्ग्रहणसामर्थ्यादित्यर्थः । फलत्वादिति । अनुनासिकप्रतिबन्धकरूपकार्यस्य प्रगृ-ह्यत्वे कर्तव्ये ऽसिद्धत्वं तु न कार्यस्याशास्त्रीयत्वादनिष्ठायामिति ज्ञापकपक्षेपि ज्ञापकसिद्धस्यासार्वत्रिकत्वान्नासिद्धत्वमिति भावः । अलृवृत्तिधर्मत्वेनेति । प्रगृह्य-त्वस्येत्यर्थः । अङ्गीकारादिति । वर्णमात्रवृत्तिधर्मस्य तेनानतिदेशेप्यस्यातत्त्वेनैत्तद्ध-र्मस्य तेनातिदेशाङ्गीकारादित्यर्थः ॥ इति स्वरसन्धिः ॥

स्तोः । सितीति । स्तोरित्यत्रेत्यर्थः । शितिचेति । श्चुरित्यत्रेत्यर्थः । लुप्तवि-भक्तिकेइति । सुपां सुलुग् हलूङ्यादिलोपाभ्यामित्यर्थः । एवं ष्टुरित्यत्रापीति बोध्यम् । सौत्रपुंस्त्वकल्पनं तु न । उभयत्र तत्कल्पने गौरवाच्छास्त्रबाधापत्ते-श्चेति भावः । तदर्थइति । विनापि प्रत्ययमिति संशब्दलोपेनेति भावः । अधि-कृतमपीति । यरोनुनासिके इत्येतदर्थमित्यर्थः । नसंबध्यतइति । सामानाधिक-रण्येन विशेष्यतया न संबध्यते किं तु वैयधिकरण्येन विशेषणतया संबध्यते इत्यर्थः । पदस्येत्यपदान्तस्य मूर्धन्य इत्यतः प्रागयमधिकार इत्यस्यायमर्थः । उत्त-रत्रानुवृत्तमपि यत्र बाधकं तत्र वैयधिकरण्येनैव संबध्यत इति । एवं ष्टुनाष्टु-रित्यत्रापि नपदान्तादिति ज्ञापकाद्वैयधिकरण्येनैव संबन्ध इति भावः । वैचित्र्या-र्थमिति । तयोरकरणेपि प्रकृते न दोष इति बोधनरूपं वैचित्र्यमर्थो यस्येत्यर्थः । स्पष्टार्थमिति । समर्थपरिभाषा त्वत्र नोपतिष्ठते यथोद्देशपक्षाङ्गीकारेण त्रिपाद्या असिद्धत्वादनामिति ज्ञापकाच्चेति भावः । षत्वस्येति । इदमुपलक्षणं विसर्गसत्व-योरपि । षण्णवतिरित्यत्रेतरेतरयोगद्वन्द्वे समाहारद्वन्द्वे वा द्विवचननपुंसकत्वयोरा-पत्तिरत आह । षडधिकेति । पृथक्पदेइति । समासस्य दिक्संख्ये संज्ञायामेवेति

नियमादप्राप्तेरिति भावः। उपलक्षणमिदंवलयोरपिप्रवृत्तेरिति। दन्तोष्ठस्थानप्रयत्नतयान्तरतमे वकारे वकारस्य, दन्तस्थानप्रयत्नैक्येनान्तरतमे लकारे लकारस्य चारितार्थ्येन वकारे वकारस्यैव लकारे लकारस्यैव प्रवृत्तेरित्यर्थः। इतिमतेनेदमिति। यदा तु यवादिगणे ककुदित्यस्यैव पाठ इति सिद्धान्तमतं, तदा यचिभं त्तसौमत्वर्थे इति तात्पूर्वं दकारप्रश्लेषेण दान्तस्य भत्वात्प्रकृते न दोष इति बोध्यम्। ननूदः परयोः स्थास्तम्भोरादेरलः स्थाने पूर्वसवर्ण इत्यर्थे ऽनुवादे परिभाषानुपस्थितेः परत्वाव्यवहितयोर्लाभो न स्यादत आह। तस्मादितीति। विधौ परिभाषेति त्विकोगुणवृद्धी अचश्चेति सूत्रद्वयविषयकमवेति प्रागुक्तमेवेत्यलम्। ननु सत्यपि संभवे बाधनं भवतीति न्यायेन पूर्वसवर्णेन संनिपातपरिभाषया चर्त्वस्य बाधात्कथं दथोश्चर्त्वमत आह। अतएवेति। एवं च भाष्यप्रामाण्यादत्रतन्न्यायानित्यत्वमिति भावः। व्यर्थमिति। सकारलोपे थस्यैव पूर्वसवर्णेनैकतकारकस्यैवोत्थानस्यैतदसत्वे च रूपस्य सिद्धेरिति भावः। ज्ञापनादिति। एवं चास्य तदपवादत्वेनापवादशास्त्रारम्भादुत्सर्गशास्त्रसंकोचस्यैवापवादेनोत्सर्गस्य बाधपदार्थत्वात्प्रकृते एतादृशसंकोचस्य ज्ञापनादित्यर्थः। ननु झयो ह इत्यस्य हकारात्परस्य झयः स्थाने झयो हस्य च स्थाने इति वाक्यार्थः कुतो नेत्यत आह। झयइतिपञ्चमीति। होढ इत्यादिना ढादिविधानाद्धकारात्परस्य झयोऽसंभवाद् द्वन्द्वनिर्देश एव कर्तव्ये व्यस्तोच्चारणसामर्थ्यात्कोटिद्वयसम्भवाच्चेति भावः। ध्वनितञ्चेदमिति। नेत्युक्तिरनुस्वारादिबाधनार्थेति तत्रोक्त्या ध्वनितमिदमिति भावः। ननु मश्चासौ पर इति कर्मधारये हे मे इत्येव सिद्धे परग्रहणं व्यर्थमत आह। मपरेइतीति। एवं च कोटिद्वयं नेति भावः। हमोरिति वक्तव्ये हे मे इति व्यस्तोच्चारणं कोटिद्वयबाधकमिति तु नात्र हे इत्यस्योत्तरार्थत्वादिति दिक्। ननु समाक्षराणां यथासंख्यमित्येव किं नेत्यत आह। व्याख्यानाच्चेति। एचोयवायाव इत्यादौ भाष्ये यथासंख्यकरणरूपादित्यर्थः। परस्मैपदानां णलित्यादौ क्रमेण पदज्ञानाभावादाह। पदादुपस्थितिर्वेति। ननु स्थानाख्यलौकिकप्रमाणबोधितवाक्ये क्रमश्चासतिबाधके इति न्यायात्साक्षात्परंपरया वा गृह्यत इति इदं सूत्रं व्यर्थमत आह। आद्यन्ताविति। स्वरितेनेत्यपकृष्यतइति। एवं च स्वरितत्वयुक्तानां समसंख्यकानां यथासंख्यमित्यर्थः। अत्र स्वरितत्वं च प्रत्येकमपेक्षते अनुवृत्तौ तु समुदायस्येति ङसि

ङसोश्चेत्यादौ ङसिङसोरिति समुदायोत्तरं विभक्तिस्थश्च एङ इति विभक्तिस्थश्चानुवृत्त्यर्थं स्वरितत्वेपि न यथासंख्यमिति भावः । तत्रेति । यथासंख्याश्रये विधावित्यर्थः । प्रतिपत्तिकालिकमेवेति । अत एव हलोयमामित्यादौ यथासंख्यं प्रवर्तत इति भावः । अत्रत्विति । कुकि टुकि च कित्त्वमित्यर्थः । पूर्वत्रेति शास्त्रबाधे गौरवादाह । यद्वेति । व्याख्यानादिति । उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति न्यायादिति भावः । वैयधिकरण्येनान्वयादिति । आर्द्धधातुकस्येडित्यत्रादिग्रहणेन विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वे एव सामानाधिकरण्यं भिन्नविभक्तिकत्वे वैयाधिकरण्यमेवेति ज्ञापनात् । अत एवात्र तदादितदन्तविधी नेति भावः । ननु लक्ष्ये लक्षणस्येति न्यायादस्य चर्त्वं न स्यादत आह । लक्ष्यभेदादिति । खर्परञ्झल्त्वावच्छिन्नं ह्यस्य लक्ष्यमत एव न संप्रसारणे संप्रसारणमिति चरितार्थमिति भावः । धुटिधस्यचर्त्वमिति । ननु स्वाविधेयस्य स्वस्मिन्निमित्तत्वाभावाच्चर्त्वं डस्य दुर्लभमिति चेन्न । संप्रसारणपूर्वत्वे समानाङ्गग्रहणं शकहूर्थमिति वार्तिकस्य संप्रसारणस्थानिकस्यातथात्वादिति तत्प्रत्याख्यानभाष्यस्य च प्रामाण्यात्स्वविधेयस्यापि स्वस्मिन्नाश्रयणेनादोषात् । ज्ञापकसिद्धस्यासार्वत्रिकत्वादस्य क्वचिदनाश्रयणेन विसर्गद्वित्वे परविसर्गस्य न द्वित्वमिति भावः । वैयाधिकरण्येनैवेति । अपदान्ते यशांसि इत्यादौ मश्चेत्यनुस्वारप्रवृत्तेर्न दोष इति भावः । स्वरसइति । तत्र हि भिन्नविभक्तित्वाद्वैयाधिकरण्यं युक्तमिति । ननु प्रकृतेसमानविभक्तित्वाभावाद्वाच्यार्थ एव पदान्तस्य तस्येत्यर्थोस्त्वित्यत आह । नान्तस्यपदस्येतीति । बलादिति । उभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति न्यायेनेति भावः । नन्वेवमचीति सप्तमीनिर्देशोव्यर्थोत आह । सप्तमीनिर्देशस्त्विति । लाघवार्थइति । मात्रार्द्धमात्रालाघवार्थ इत्यर्थः । ननु ङम इत्यस्य षष्ठ्यन्तत्वमेव एवं चार्थ इति यथाश्रुतं कतोनेत्यत आह । ङमउत्तरस्येति । एतदर्थम् । तदादिविधिलाभार्थम् । एवेति । अपीत्यर्थः । एतेन लाघवोत्तरार्थत्वयोरापि तस्य सत्त्वादित्यसंगतमित्यपास्तम् । ननु पदे इत्यस्य मण्डूकप्लुत्यानुवृत्तौ विभक्तिव्यत्ययकल्पनापेक्षया न लाघवमत आह । ङमन्तंयत्पदमित्यर्थेपीति । निषेधासिद्धयइति । अतद्धित इत्यस्य प्रत्याख्यानाय पदे व्यवाय इति सप्तमीसमासाश्रयणे इत्यर्थः । एतेन पूर्वदाण्डिप्रिय इत्यादिसिध्यर्थं मध्यमपदत्वानाक्रान्तोत्तरपदस्येत्यर्थान्माषकुम्भवापेनेत्यादौ न दोष इत्यपास्तम् । उत्तरपदस्य कार्यित्वं तत्रैवेति । उत्तर-

पदत्वप्रयुक्ते पदादिभिन्नस्य विधाविति पर्युदासाश्रयणादिति भावः । एकदेशीन इति । अपदादिविधावित्यस्य प्रसज्यप्रतिषेधाश्रयणे गौरवान्न पदान्त न लुमताङ्गस्योञ्नि च पदे षात्पदान्तात्पदव्यवायेपि त्यादिसूत्रस्थभाष्यविरोधाच्चेति भावः । अयमधिकारइति । तुग्रहणात् । नन्वेवमत्रग्रहणमधिकारपक्षे व्यर्थमत आह । अत्रेतित्विति व्याख्यानादिति । अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वेत्येव सिद्धे पृथक्सूत्रकरणरूपादित्यर्थः । मानाभावादिति । फलाभावादित्यर्थः । व्याख्यानादिति । खरवसानयोः सः शर्परे विसर्जनीय इत्येव सिद्धे ऽवसाने विसर्जनीयविधानज्ञापकरूपादुत्तरसाहचर्यरूपादुत्तरत्रार्थाधिकारानुरोधरूपाद्वेत्यर्थः । प्राश्लिष्यवेति । सम इत्युत्तरं कानाम्रेडित इति पाठ्यमेवं च तत्सूत्रद्वयेपि समः सुटीत्यत एव सकारानुवृत्तिरिति भावः । इदमिति । शरः खय इतीदमित्यर्थः । ननु पूर्वत्रासिद्धीयमद्वित्व इत्यनेन द्वित्वभिन्ने पूर्वत्र परमसिद्धमित्यर्थकेन परस्यासिद्धत्वनिषेधाद्विरोधाभावेन विप्रतिषेधे परमित्यस्याप्यप्रवृत्तत्वाच्चोभयोरप्येकवारमेव प्रवृत्त्या एकद्विरुच्चारणस्यैव साधुत्वस्य युक्तत्वेन पुनर्द्वित्वमशुद्धमत आह । पूर्वत्रासिद्धत्वेनेति । पूर्वत्रासिद्धीयमद्वित्वे इति तु नात्र प्रवर्तते तत्प्रवृत्तावन्तरङ्गपरिभाषया यणो मय इत्यस्मिन्नन्तरङ्गे बहिरङ्गस्याचोरहाभ्यामित्यस्यासिद्धत्वेनाप्रवृत्तौ तु पूर्वत्रेत्यनेन यणो मय इत्यस्यासिद्धत्वेन रूपस्य तुल्यत्वात्फले विशेषाभावादिति भावः । नन्वम्परे इत्यत्र कर्मधारयाश्रयणेन खय्यमि चेति कोटिद्वयं कुतो नेत्यत आह । अम्परेइतीति बहुव्रीहिरिति । परग्रहणसामर्थ्यादिति भावः । व्यस्तोच्चारणं तु अम्पर इत्यस्य नश्छवीत्यत्रानुवृत्त्यर्थमिति बोध्यम् । ननु ᳲकᳲपयोरिति न्यूनं तद्विधेयो विसर्गोप्यस्तीत्याह । कुप्वोरिति । नन्वीरनि प्रकृते घसेः किच्चेति व्युत्पादिते क्षीरशब्दे चर्वस्यासिद्धत्वात्खय्परत्वाभावोत आह । क्षरधातोरिति । अत एव निरुक्ते क्षीरमिति क्षरतेर्घसेर्वेत्युक्तम् । ईत्वेप्रत्ययइति । बाहुलकादिति भावः । ननु शर्पर इत्यस्याबाधेपि तद्विहितविसर्गस्य कुप्वोरिति कुतो नेति शङ्कते । नचेति । नन्वर्थाधिकारात्खरवसानयोरिति विसर्गस्यैव तत्स्यादत आह । किञ्चेति । एवं च पूर्वत्रेति शास्त्रबाधकल्पनापेक्षया ऽर्थाधिकारबाधस्यौचित्यादिति भावः । षत्वापत्तेरिति । इणः ष इत्यनुवृत्तिपक्षे इदम् । गुणे कृते षत्वसत्वानामेव पाठ इति पक्षे तु कांस्कान् संस्कृतमिति पाठेन तत्र

निर्वाहेपि पुंस्कोकिल इत्यादिबहुलक्ष्याणां पाठे गौरवापत्तेरितिबोध्यम् । नन्वतः कु इत्यत्र अत इति निर्देशादिण इत्यस्य निवृत्त्या इदमसंगतमित्यत आह । गणेति । ननु माङिति धातोरापि ग्रहणे प्रमाच्छेद्य इत्यत्र नित्यतुगापत्तिरत आह । व्याख्यानादिति । ननु सेनासुरा इत्यादावुत्तरसूत्रस्य वैकल्पिकत्वादनुपपत्तिरत आह । व्याख्यानादिति । व्याख्यानमेवाह । एओङिति । तत्र हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पक्षे आलूयेत्यादौ ह्रस्वस्येति तुकमाशङ्क्य छे चेत्येव सिद्धे दीर्घादिति तुग्विधानं ज्ञापयतीति न दीर्घावयवस्य ह्रस्वत्वप्रयुक्तस्तुग्भवतीत्युक्तम् । ननु प्रकृतसूत्रे इकोयणचीति सूत्रे दीर्घात्पदान्ताद्वेति एकमेवेति लभ्यते ऽत आह । योगविभागइति । असामर्थ्येपिइति । दण्डिंच्छात्रा इत्यादावित्यर्थः ॥ इति हल्सन्धिः ॥

बहुव्रीहिरिति । न तु कर्मधारयः । परग्रहणादुत्तरसूत्रसामर्थ्याच्चेति भावः । व्याख्यानादिति । अव्ययीभावस्याव्ययत्वे लुङ्मुखस्वरोपचाराः प्रयोजनमिति परिगणनादित्यर्थः । नन्विण इत्यारम्भात्पूर्वत्र आकाराद्युत्तरविसर्गस्यैव ग्रहणेन गीःकाम्यतीत्यत्र तदप्राप्त्या काम्यैरोरेवेत्यस्येण इत्यत्रैव पाठे कर्तव्ये पूर्वसूत्रे पाठो व्यर्थोत आह । याःकाम्यतीत्यस्यापीति । अनव्ययस्येत्यादीति । आदिना काम्य इत्यस्य ग्रहणम् । तेन दुष्करोतीति । द्विष्कृतं दुष्कृतमित्यनयोस्तु गतिकारकोपपदानामिति सुबुत्पत्तेः प्राक्समासादपदादावित्यस्य संबन्धेपि न दोष इति भावः । व्याख्यानादिति । क्रियायोगे गतिसंज्ञाविधानेनात्र संभवादुत्तरत्र मण्डूकानुवृत्तौ मानाभावाच्चेत्यर्थः । नषत्वमिति । अग्निःकरोतीत्यादौ तु व्यपदेशिवद्भावेन निषेध इति बोध्यम् । षत्वापत्तेरिति । अप्रत्ययस्येति वैयर्थ्यापत्त्या तथा नार्थ इति भावः । गीःकरोतीति । पूः करोतीत्यस्याप्युपलक्षणमिदम् । उचितमिति । ननु चतुष्करोतीत्यादावेतस्यासिद्धत्वादिदुदुपधस्येति नित्यं षः स्यादिति चेन्न । इदुदुपधस्येत्यनुवृत्त्या इदुदुपधस्य सुजन्तस्येत्यर्थादनेनैव तद्बाधादिति भावः । इत्यादीति । आदिना चतुष्पादोगर्भिण्या अपाच्चतुष्पादित्यनयोर्ग्रहणम् । नित्यषत्वापत्तेरिति । पञ्चकृत्वः करोतीत्यादावतिव्याप्तिवारणेनेदुदुपधस्येत्यनुवृत्तेरत्र पक्षे चारितार्थ्यादिति भावः । प्रकरणे प्रकरणमसिद्धमिति पक्षे दूषणमाह । किञ्चेति । नन्वव्ययमात्रग्रहणे मानाभावोऽत आह । किञ्चास्येति । नन्वत्र सा-

मान्यग्रहणे उत्तरत्र एतदन्तर्गतविशेषणग्रहणेपि नार्थाधिकारबाधः । किंचार्थाधिकारेण बोधकवाक्ययोरेवेसुसोर्ग्रहणे सामर्थ्ये इति स्यादत आह । साहचर्याच्चेति । ज्ञापकसिद्धस्यासार्वत्रिकत्वादाह । क्वचिदिति । तेन ष्यङः संप्रसारणमित्यादौ नेति भावः । शब्दस्वरूपम् । यस्मात्प्रत्ययविधिस्तदादिरूपम् । ज्ञापनेनेति । ननु परमसर्पिः कुण्डिकेत्यादौ सर्पिः शब्दस्य मध्यमत्वान्मध्यमपदत्वानाक्रान्तोत्तरपदस्य उत्तरपदस्य पदत्वप्रयुक्ते कार्ये प्रत्ययलक्षणनिषेधोत्रत्योत्तरपदस्य सर्पिः कुण्डिकाशब्दस्य परमशब्देन समासे तत्रत्यसर्पिःशब्दस्यायुःशब्देन समासोत्तरं कामशब्देन समासे आयुः शब्दस्य परादिवत्त्वेनोत्तरपदत्वात्समुदायोत्तरमायुः शब्दस्य च पदत्वात्कथं ज्ञापकमिति चेन्न । समासेन समासाद्यावयवपूर्वपदाक्षेपेण पदसंज्ञोत्तरपदत्वानीधकरणेप्युसन्तपूर्वपदस्य विसर्गान्तस्य षत्वमित्यर्थाज्ज्ञापकत्वसंभवात् । सर्वत्र । ज्ञापकपरभाष्ये । अतएवेति । उपातं विशेष्यमादाय तदन्तविधेरेवेत्यर्थः । अधात्वभिहितमिति । धातोःप्रत्ययइति । सुप्सुपेति समासे ततो ऽभिहितशब्देन कर्तृकरणे इति समासे शाकपार्थिवादित्वान्मध्यमपदलोपे नञ्समासे च प्रत्यासत्त्या षत्वनिमित्तकपवर्गघटितधातुप्रत्ययाभिहितभिन्नं समानाधिकरणमसमर्थवदिति तदर्थस्तदाह । धातुसहचरितेति । ननु पूर्वपदाक्षेपेपि तस्य शाब्दे अन्वयप्रतियोगित्वं न स्यात् । वृत्त्यनुपस्थितत्वात् समासावयवे रूढौ मानाभावाच्चोपात्तविशेषणत्वे शब्दरूपं विशेष्यमादाय तदन्ताविधावनुत्तरपदस्थस्येति ज्ञापकासंभवात्परमसर्पिष्करोतीत्यादौ षत्वं न स्यादत आह। यदात्विति । ज्ञापकपरभाष्यप्रामाण्यं त्वेकदेश्युक्तिः । अत एव नित्यं समास इति सूत्रभाष्ये अथाव्युत्पन्नं प्रातिपदिकं सपिरादि ततोनित्ये प्राप्ते इसुसोः सामर्थ्ये इति विभाषारभ्यत इत्युक्तं संगच्छते । व्याख्यानादिति । सामर्थ्ये इत्यनुवृत्त्यैव सिद्धे उत्तरसूत्रे समासग्रहणसामर्थ्यादित्यर्थः । कस्कादिपाठस्यव्यपेक्षायामिति । व्यपेक्षायां त्वस्यासिद्धत्वादप्राप्तत्वात्कस्कादिपाठस्य चारितार्थ्येन व्यपेक्षायां विकल्प एवोचित इति तदर्थ इति भावः । नन्वनेन विकल्पेपि एतदभावपक्षे व्यपेक्षायां कस्कादिषु चेति नित्यषत्वं दुर्वारम् । नचैतद्बोधिताभावांशे निषेधाश्चबलीयांस इति न्यायात्तत्प्राप्तषत्वस्यापि बाध इति वाच्यम् । एतद्दृष्ट्या तत्सूत्रस्यासिद्धत्वादिति चेन्न । प्रकरणे प्रकरणमसिद्धमिति मते तद्ग्रन्थस्य सत्त्वात् । इत्य-

थेंत्विति । तुनारुचिर्बोधिता । बाध्यसामान्यचिन्ताश्रयणे प्रमाणाभावात्प्रकरणे प्रकरणमसिद्धमिति पक्षस्य भाष्ये दूषितत्वाच्च व्यपेक्षायामपिनित्यषत्वमेवोचितमिति ॥ इति विसर्गसंधिः ॥

रुरेवेति । प्रक्रियालाघवायेति भावः । सर्वत्रसुग्रहणेइति । सौ च सुपिचेत्यादावित्यर्थः । नन्वेवं राम इत्यादौ सुपि चेति दीर्घापत्तिः । हरयवडितिन्यासेनादोषादिति भावः । प्रथमैकवचनेचारितार्थ्यादिति । अप्लुतादत इत्यनयोस्तु आगच्छतु देवदत्त३ अत्र स्नातु तिष्ठतु देवदत्त३ अग्निरित्यादौ चारितार्थ्यमिति भावः । जश्त्वापवादइति । सर्वत्र पदान्तसकारे जश्त्वप्राप्त्या रुत्वविधायकस्य वैयर्थ्यापत्त्या रुत्वं जश्त्वापवाद इति भावः । नन्वेवं सत्त्वशास्त्रस्य जश्त्वशास्त्रे ऽसिद्धत्वाभावाय रुत्वशास्त्रे पूर्वत्रासिद्धमित्यस्यानुपस्थितौ रुत्वविधायकं प्रत्यसिद्धत्वाभावेन संयोगान्तलोपं परत्वाद्बाधित्वा रुत्वे यणः प्रतिषेधाज्झलन्तत्वाभावाच्च संयोगान्तलोपाप्राप्त्या श्रेयानित्यादौ दोषोत आह । श्रेयानित्यादौत्विति । अस्य । रुत्वस्य । असिद्धत्वात् । संयोगान्तलोपं प्रत्यसिद्धत्वाद्रुत्वशास्त्र उपस्थितपूर्वत्रासिद्धमित्यत्रत्यपूर्वपदेन जश्त्वातिरिक्तस्य ग्रहणेनापि उपपत्तौ सर्वथा रुत्वशास्त्रे पूर्वत्रेत्यस्यानुपस्थितावुत्तरत्र मण्डूकानुवृत्तौ च न मानमिति भावः । व्याख्यानादिति । तस्माच्छसो न इति लिङ्गादित्यर्थः । पूर्वस्यादीर्घत्वादिति । रामानित्यादावित्यर्थः । ननु यत्र पूर्वस्य दीर्घत्वं तत्रैवेदं प्रवर्तत इति चेन्न । शसि पूर्व इत्येव सिद्धे प्रथमयोरिति करणेन दीर्घाज्जसि च नादिचीत्यनयोरारम्भेण ह्रस्वान्तेऽप्यस्य विशिष्यप्रवृत्तिरिति ज्ञापनादिति भावः । स्पष्टंचेदंस्वादिष्वितिसूत्रेकैयट इति । तत्रासर्वनामस्थान इति प्रसज्यप्रतिषेधपक्षे वागित्यत्र सुप्तिङन्तामित्यस्य स्वादिष्वित्यनेन परत्वाद्बाधे तस्याप्यसर्वनामस्थाने इत्यनेन बाधे पदत्वाभावात्कुत्वं न स्यादित्याशङ्क्य नोत्सहते प्रतिषिद्धं सद्बाधितुमिति भाष्यव्याख्यावसरे कैयटे इत्यर्थः । ननु रोर्ग्रहणादित्येव सिद्धे उकारानुबन्धेति व्यर्थमत आह । उकारेत्संज्ञकेति । तत्फलमाह । तेनेति । ननु भो इत्यादिपूर्वकस्य रोरित्यर्थे प्रभोरिदमित्यादावति व्याप्तिः स्याल्लक्षणप्रतिपदोक्तपरिभाषास्वीकारे तु विभाभवदिति निष्पन्नेष्वव्याप्तिः स्यादत आह । इदमिति । वस्तुतइति । दीर्घेइति । ग्रहीलिटीत्यत्राच इत्यस्योपस्थितावप्यजन्तस्येट इत्यर्थादिट एव विशेष्यत्वान्न दोष इति

भावः । एवं हल्ङ्याबादिसूत्रेऽपि हलन्तमपृक्तसंज्ञकं सुतिसि लुप्यत इत्यर्थः । तेन राजेत्यादौ सर्वनामस्थाने चेति दीर्घोऽचकादित्यादौ तिप्यनस्तेरिति दत्वम्, अचका इत्यादौ सिपि धातोरिति रुत्वं च सिध्यतीति बोध्यम् । ननु सुबन्तस्यानयने विशेषणतया अलाश्रयणमत आह । तत्प्रयुक्तवृत्तिधर्मलाभ इति । स्थानिभूताल्रूपप्रत्ययावयववृत्तिधर्मलाभो नेत्यर्थः । ननु स्थानिवत्सूत्रे ऽनल्विधावित्युक्तेस्तस्मादत्राप्रवृत्तावप्येतस्याप्रवृत्तौ मानाभावोऽत आह । लक्ष्येति । प्रत्यये स्थानिभूताल्प्रत्ययनिमित्तकार्यस्य दीर्घाहो निदाघेत्यादावसुपीति निषेधस्येत्यर्थः । शास्त्रातिदेशपक्षे आह । तन्निमित्तव्यवहारस्येवेति । प्रकृते सुप्त्वस्य राजेत्यादौ सुबन्तस्य चेत्यर्थः । सर्वे सर्वपदादेशा इति पक्षे दीर्घाह इत्यादेर्निर्वाहमाह । एवमिति । अन्यत्रेति । मनोरमायामित्यर्थः । अनेनात्रारुचिर्बोधिता । वार्तिके भवच्छब्दग्रहणस्य नोपयोग इति । व्याख्यानादिति । लोपःशाकल्यस्येत्येव भो इत्याद्यनुवृत्त्येत्यादि वक्ष्यमाणरूपादित्यर्थ इत्याहुः । ननु उ इतीत्यत्रोञ इति प्रगृह्यत्वविकल्पात्पक्षे यणि मिथोवितीत्यादौ धात्वनवयवस्यापि वकारस्य संभवाद्वकारानुवृत्तिः स्यादेवेत्यत आह । भाष्यानुसारिणस्त्विति । अनभिधानाच्चेति । न पदान्ताः परेऽणः सन्तीति लण्सूत्रस्थभाष्येण लोपोव्योरिति सूत्रे क्वावुपसंख्यानमिति वार्तिकस्य चारम्भप्रत्याख्यानपरभाष्येण च शास्त्रादिधेयवकारान्तादीनामनभिधानाच्चेत्यर्थः । एतदपीति । अत्रापि पूर्वोक्तमेव मानं बोध्यम् । अस्य । हलिसर्वेषामित्यस्य । असिद्धत्वादिति । भो इत्यादिपूर्वकसाहचर्येणापूर्वेऽपि लघुप्रयत्ने एव लोपस्यैतस्य प्राप्तत्वेनालघुप्रयत्ने प्राप्तत्वादित्यर्थः । तद्बाधादिति । एतत्सूत्रसामर्थ्यात्साहचर्यबाधेन तत्प्रवृत्त्युत्तरमप्यस्य प्रवृत्त्या तद्बोधिताभावांशबाधादित्यर्थः । एवेति । तथा च भो इत्यादीनामोत इत्येव सिद्धत्वादसंभव एव स्यादिति भावः । ननु उश्च्रेश्च वी न वी अवी तयोरव्योरित्यत्र वलोपार्थमेव वकारानुवृत्तिरतआह । अव्यपरइत्यादीति । एवं च व्योरित्यत्र लोपोनैवेष्ट इति भावः । आदिना हयवरट्सूत्रस्थाव्युपधादिति भाष्यप्रयोगस्य ग्रहणम् । क्वचिदिति । पञ्चम्यन्तात्परः प्रत्ययो यत्र कार्यान्तरविधिना च परि गृह्यते तत्रेत्यर्थः । एवं चोत्तमैकाभ्यामित्यादिनिर्देशैर्व्यापकत्वात्प्रत्ययगृहणे चापञ्चम्या इत्येव ज्ञाप्यते न तु सप्तमीनिर्दिष्ट इत्यादिविशेष इति भावः । ननु "न चोदाहरणमादरणीयमिति" न्यायेन

रात्रिशब्दस्य परत्वेऽपि तत्प्रवृत्तौ न बाधकमत आह। नलोपःप्रातिपदिकान्तस्येति। अक्षतोरिति। सर्वे सर्वपदादेशा इति न्यायेनेति भावः। नन्वहन् शब्दो रोः सुपीति नित्ये प्राप्ते ऽनेन विकल्पविधानं सार्थकमिति कथं विसर्गबाधोत आह। अनुवाद- इति। ननु तत्पुरुषे रोरीत्यस्यासिद्धत्वादनीयर्येव प्रवृत्तौ शास्त्रस्याल्पविषयता स्या- दत आह। चचारेत्यादौ चेति। आदिना केलिमर्संगूहः। ननु णिजन्तात्कर्मणि वृ- त्तित्रयकल्पनमिति गौरवमत आह। भाष्येत्विति। व्यधिकरणपदबहुव्रीहिरिति। स- प्तमी विशेषण इति सप्तमीग्रहणेन व्यधिकरणेनापि बहुव्रीहिज्ञापनादिति भावः। व्या- ख्यानादिति। अच्परिभाषोपस्थित्याच एवाणो ग्रहणे तथैव सिद्धे ऽण्ग्रहणसामर्थ्यादित्य- र्थः। सइति। विरोध इत्यर्थः। ननु ङःसीत्यादावुभयनिर्देशान् निर्देशद्वयस्याप्यच- रितार्थत्वेन तन्मूलकपरिभाषाद्वयस्याप्यचरितार्थ्याद्विप्रतिषेधाभावेन विप्रतिषेधे परमि- त्यस्य प्रवृत्तिर्न स्यादत आह। प्रायेणेति। पुनर्द्विर्भवस्येवेति। तांतङ्भावपक्षे इत्य- र्थः। ननु कार्यकालपक्षे परिभाषाद्वयस्यापि विधिसूत्रेण कर्षणाद्विप्रतिषेधसूत्रस्या- प्रवृत्तिरेव स्यादित्यत आह। त्रिपादीस्थेनेति। संज्ञानां तुनारुचिर्बोधिता। कार्यका- लपक्षे संज्ञानां कार्यदेशीयपरत्वे राज्ञ इत्यादौ भपदसञ्ज्ञयोराकडारीयत्वाभावात्स- मावेशापत्त्याल्लोपोन इत्यत्र कार्यकालं सञ्ज्ञापरिभाषं भस्येत्युपास्थितमिदं भवति ष्यङः संप्रसारणमिति सूत्रस्थभाष्यविरोधात्प्रगृह्यसञ्ज्ञाया अन्तरङ्गत्वेन विप्रतिषेधस्यासं- भवादनुपयोगाच्चादसोमादिति सूत्रस्थभाष्यमेकदेश्युक्तिरिति। परिभाषाणां त्विति। अ- व्ययानामनेकार्थत्वात्तुशब्दस्याप्यर्थवत्त्वात्सञ्ज्ञाग्रहणं बोध्यम्। परिभाषेति। एवं च गुणानां च परार्थत्वादिति न्यायेन सञ्ज्ञापरिभाषयोर्व्यवस्थापिकेयं न स्यादिति भावः। परिभाषयोरपीति। अपिना सञ्ज्ञानां ग्रहणं बोध्यम्। इत्यादयोपीति। आदिना ऽनुदात्तं पदमेकवर्जं, समर्थः पदविधिरित्यनयोर्ग्रहणम्। कैयटादिमतेप्याह। स्थानिवत्त्वेनेति। अनन्तरइत्यर्थइति। न तु विहित इत्यर्थो ऽनञ्समास इति ज्ञाप- कादिति भावः। अनन्तर इति व्याख्याने फलमाह। तेनेति। ननु गौणव्यावृत्त्य- र्थमेतत्तदोरित्यस्यार्थपरत्वमाश्रित्यैतदर्थसंबन्धो तदर्थगतसंख्याभिधायी यः सुरिति व्याख्येयमेवं चानञ्समासे इत्यस्य न वैयर्थ्यं परमस ददातीत्यास्यापि सिद्धिश्चेत्यत आह। गौणेत्विति। एवं च गौरवात्फलाभावाच्च न तथा व्याख्येयमिति भावः। व्याख्यानात्। उत्तरसूत्रे तस्यैव संभवादित्यर्थः। प्रध्वस्यन्त एव पाद इति भ्रमनि-

राशायाह । द्वादशेति । वृद्धेरिति । एवं च मूलकारस्य न तत्संमतमिति सूचितम् । व्यर्थमिति । साअस्माअरमित्यस्यासिद्धेर्विरोधायेदं व्यर्थमिति तदर्थः । शाकपार्थिवादित्वाद्बोधशब्दस्य लोपस्तदाह । सर्वमेतदिति ॥ इति स्वादिसंधिः ॥

अर्थवदधातुः । आवर्तिते ऽप्रत्ययपदेइति । आवर्तिते प्रत्यय इति समुदाये विद्यमानं यत्प्रत्ययपदं तस्येत्यर्थः । यत्रेति । ईदूद्देदित्यादावित्यर्थः । तद्विषयइति । विषयशब्दोनन्यभावे ज्ञापकसाजात्यात्तथैव लाभादिति भावः । सोपि निषेधो ज्ञापकसाजात्यात्प्रत्यासत्त्या च यत्र प्रत्ययस्य सञ्ज्ञा तत्रेत्येव । न च तत्र प्रातिपदिकादित्यनेनान्वयादेव तदन्तविधिः । प्रातिपदिकविशेषणे तदन्तविधौ तदादिविधेरभावात्परमगार्ग्यशब्दात्फगापत्तेरिति दिक् । आवर्तितेप्रत्ययपदेइति । आवर्तिते अप्रत्ययपदे इति च्छेदः । यद्वा आवर्तिते ऽप्रत्ययपदे विद्यमाने प्रत्ययपदे इति वैयधिकरण्येन संबन्धः । यत्रसञ्ज्ञेति । येन प्रत्ययेन तदन्तग्रहणं तस्य यत्र विधौ सञ्ज्ञाविधानं तद्विषय इत्यर्थः । तेन परमगार्ग्यशब्दान्न फगिति भावः । एतत्सञ्ज्ञाफलभूतेति । अस्यार्थः । एतत्सञ्ज्ञाफलभूतश्च विभक्तिश्च एतत्सञ्ज्ञाफलभूतविभक्ती ताभ्यामितरो यः स्ववृत्तिपदसञ्ज्ञाविशिष्टावयवस्तत्समभिव्याहारानपेक्षया लोकेऽर्थविषयकः शक्तिर्लक्षणान्यतरसंबन्धेन यो बोधस्तज्जनकत्वमिति । विभक्तिश्चैतत्सञ्ज्ञाफलभूतसाहचर्याद्यस्य प्रातिपदिकसञ्ज्ञाप्रसङ्गस्तत्प्रकृतिकैव गृह्यते ताभ्यामितरोपि पर्युदासन्यायेन यस्य प्रातिपदिकसञ्ज्ञाप्रसङ्गस्तद्वृत्तिपदसञ्ज्ञाविशिष्टावयव एव गृह्यते । खट्वा पक्त्रिममित्यादौ टाप्मप्प्रकृतिभूतखट्वपक्त्रिशब्दयोः प्रातिपदिकत्वायाह एतत्सञ्ज्ञाफलभूतेति । अर्थवत्सूत्रोक्ता ऽपि काकः श्येनायते इत्यादौ श्येनमुयेत्यादेरर्थवत्त्वायाह विभक्तीति । केवलप्रत्ययस्य प्रकृतिसमभिव्याहृतस्य कुम्भकार इत्यादौ कार इत्यादेः पञ्चनावप्रिय इत्यादौ पञ्चना वेत्यादेश्चार्थवत्त्वाभावायाह इतरेत्यारभ्यजनकत्वमित्यन्तम् । मूलकेनोपदंशम्भुङ्क्ते कारयाञ्चकारेत्यादौ उपदंशमित्यादेः कारयामित्यादेश्चार्थवत्त्वायेतरपदार्थः स्ववृत्तिपदसञ्ज्ञाविशिष्टावयवत्वेन विशेषणीयः । देवतोगार्ग्य इत्यादौ देवदत्तसुगार्ग्य इति समुदायस्य सुप्रत्ययप्राग्वर्तिनोर्थवत्त्वाभावाय बोधः । शक्तिलक्षणान्यतरसंबन्धेन विशेषणीय इत्यलमतिविस्तरेण । नचेति । न हीत्यर्थः । तत् । पूर्वोक्तमर्थवत्त्वमप्रत्ययस्य प्रातिपदिकत्वे हि पचेरन्नित्यादौ नलोपटाबाद्यापत्तिरिति भावः ।

अतएव । सूत्रद्वये एवमर्थवद्ग्रहणादेव । अत एवानुवृत्तिसामर्थ्यादित्येवोक्तम् । न त्वर्थवद्ग्रहणसामर्थ्यादिति । अतएव । सूत्रद्वये एतादृशार्थवत्त्वस्वीकारादेव । फलाभावेनेति । अस्मिन्पक्षे उत्तरत्र तद्धितग्रहणं न कार्यमिति भावः । समासतद्धितनियमस्य निषेधमुखेनाह । अनेनेति । विधिमुखेनाह । नापीति । नन्वेवमत्रार्थवत्पदव्यावर्त्यालाभोत आह । दर्शेति । अत्रस्वातन्त्र्येणेति । पूर्वभागे इत्यर्थः । गवित्ययमिति । इदं प्राचामनुरोधेन । वस्तुतस्तत्रापि सुबन्तत्वाद्यत्र पूर्वोभागः सुबन्ततिङन्तकृदन्तान्यतमस्तस्य चेत्यर्थः । उत्तरभागोपि तथैव ग्राह्य इत्याह । यत्रपूर्वइति । तेन परमगार्ग्यायण इत्यादौ नियमस्याभावः । कटं कृतपूर्वीत्यादौ नियमश्च सिद्धः । इदमेव स्वातन्त्र्यपदेनाभिप्रेतमन्यथा मूलकेनोपदंशं कुम्भकार इत्यादावितरानपेक्षत्वाभावेन यथाश्रुतासङ्गतिः । तत्र पूर्व इत्याक्षिप्तपरेषामपि स्वातन्त्र्येण प्रयोगार्हवतामेव ग्रहणात्पुत्रकाम्येत्यादौ न दोषः । अत एवाङ्गसञ्ज्ञासूत्रे भाष्ये प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषायाः फलनिरूपणावसरे देवदत्तोगार्ग्येति समुदायस्य यत्र तत्त्वेन प्राप्ता प्रातिपदिकसञ्ज्ञाभावफलस्तत्त्वेनोक्तः । यथाश्रुतमूलोक्तनियमे तु नियमेनैव तत्र तदप्राप्त्या भाष्यासङ्गतिः स्पष्टैव । पुत्रकाम्येति । काम्येति समुदायस्य प्रत्ययस्याप्रत्ययत्वादुत्तरस्तु तत्प्रकृतिकप्रत्ययोनेति उक्तावपि दोष इति भावः । फलनिरूपणावसरे विशेषग्रहणे इत्यर्थः । सामान्यग्रहणे फलं तु अर्थवत्सूत्रे प्रत्यय इत्यत्र परिभाषाप्रवृत्त्या समासस्याप्रत्ययान्तत्वेन सिद्धे प्रातिपदिकत्वे कृत्तद्धितेति सूत्रे तद्ग्रहणस्य नियमार्थत्वान्मूलकेनोपदंशमित्यादौ कृदन्तत्वात्प्राप्तप्रातिपदिकत्वाभाव इति स्पष्टमेव । अत एवोत्तरसूत्रपर्यन्तमनुधावनं भाष्ये सङ्गच्छते । तत्रतत्त्वेनप्राप्तइति । अर्थवदित्यस्य पूर्वत्र क्लृप्तार्थकस्य कृत्तद्धितयोर्विशेषणसामर्थ्याच्छब्दरूपं विशेष्यमध्याहृत्य तदन्तविधौ कृत्तद्धितान्तेत्यर्थे ऽर्थवदित्यस्य तद्विशेषणत्वात्तदंशेपि तदन्तविधावर्थवदन्तन्तद्धितान्तमित्यर्थात्तत्प्राप्तिरिति भावः । यत्तु विकारागमादेशानां देशांशे निराकाङ्क्षत्वात्परश्चेत्यस्यानुपस्थितौ तत्संनियोगशिष्टप्रत्ययसञ्ज्ञाया अप्रवृत्तिरिति । तन्न । श्नमकज्वहुज्वप्रवृत्त्यापत्तेः । किं च लविषीयेत्यत्र विशेषविहितत्वात्परत्वाच्च पूर्वं सीयुटि ततो लादेशे प्रत्ययसंनियोगेनेटो विधीमानमाद्युदात्तत्वं सीयुट एव स्यादत आह । आगमानुदात्तत्वं वक्ष-

व्यमित्याद्युदात्तश्चेति सूत्रस्थभाष्यकैयटासङ्गतिः । तत्र बहुचः प्रत्ययत्वमीषन्न्यून उर्वहूस्तस्मात्क्याचि सर्वप्रातिपदिकेभ्य इति सुकि बहूप्यति इत्यत्र षत्वम् । आगमानुदात्तत्वं वक्तव्यमिति । यदागमपरिभाषानित्यत्वबोधनद्वाराऽनुदात्तं पदमित्यनेन सिद्धानुदात्तत्वानुवादकमिदम् । एवं सतीट आद्युदात्तत्वः सिद्धम् । लिङ्गविशिष्टेति । इतश्च प्रातिपदिकसामान्यग्रहणे विशेषग्रहणे च अनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यस्य भाष्ये शङ्कितत्वाद्विशेषविषये बहुतरोदाहरणदानाच्च । ननु प्रातिपदिकग्रहणे तत्प्रकृतिकलिङ्गबोधकप्रत्ययाविशिष्टस्यापि ग्रहणमिति तदर्थाद्बहुव्रीहेरूधस इति सूत्रस्थभाष्यासङ्गतिरत आह । स्त्रीप्रत्ययसमभिव्याहारेति । प्रातिपदिकं गृह्यते यस्मिन् कार्ये तत्र कर्तव्ये स्त्रीप्रत्ययसमभिव्याहारे तत्प्रकृतौ दृष्टाः प्रातिपदिकत्वतद्व्याप्यधर्मा विशिष्टे यस्माद्विहितस्त्रीप्रत्ययस्तदादितदन्तेऽनेनातिदिश्यन्ते इत्यर्थ इति भावः । तस्यापि सुबन्तादुत्पत्तौ तु पुर्वं सुपीनुणन्तत्वरूपाधिकसापेक्षत्वेनेति पूर्वं सुपि समासाय संशब्दस्य प्रयोगे सति कृद्ग्रहणपरिभाषया गतिकारकसमभिव्याहारे तद्विशिष्टे एव कृदन्तत्वबोधनेन संशब्दविशिष्टे एवेनुणन्तत्वादिनुणन्तत्वं रूपं यस्मिन्प्रातिपदिके न ह्यधिकसापेक्षत्वेनेत्यर्थः । बहिरङ्गतयेति । समासात्पूर्वं संशब्दविशिष्टे प्रातिपदिकत्वाभावेनाप्राप्त्या बहिरङ्गतयेत्यर्थः । प्राक् सुबुत्पत्तेः प्रत्यये तु सुपः पूर्वं समासाप्राप्त्या संशब्दाप्रयोगात्कूटिन्नित्यस्यैवेनुणन्तत्वेनाण्विभक्त्योः प्राप्तयोः स्वार्थिकत्वेनान्तरङ्गत्वादणि ततः सुपि ततः समः प्रयोगे समासे कूटशब्दोकारस्यैव वृद्धिः स्यादिति भावः । प्राक् सुबुत्पत्तेः समासे तूक्तरीत्यैव सुपः पूर्वं समासप्राप्त्या समःप्रयोगे उक्तरीत्या संविशिष्टे एवेनुणन्तत्वेन तस्य च प्रातिपदिकत्वादणोप्राप्त्यान्तरङ्गत्वात्पूर्वं समासे ततो विशिष्टादेवाणिति सिद्धमिष्टमिति भावः । अन्यथौजसोः पूर्वेत्येव वदेदिति । ज्ञानमित्यादावमि पूर्व इत्यनेन प्रतिपदोक्तत्वाद्बाधेन कतरमित्यत्र डित्वाट्टिलोपेन च सावसंभव इत्यर्थः । एतर्हीत्यादौ सुपिचेति दीर्घापत्तेरिति । हरयवडिति न्यासे तु सर्वदेत्यादौ सर्वस्य सुपीत्याद्युदात्तत्वापत्तेः । तत्र भुक्तमित्यादौ सुपोधात्विति लुगापत्तेश्चेति बोध्यम् । रुत्वे एकदेशविकृतन्यायेन सुबन्ततया परत्वाद्विसर्ग इति । एकदेशविकृतन्यायेनेत्यस्य पदत्वादित्यत्रान्वयः । एवञ्च रुत्वे कृते सति रामरित्यस्य सुबन्ताप्रयोज्यादेकदेशविकृतन्यायेन पदत्वे सिद्धे विसर्ग इत्य-

र्थः । अत एव विभक्त्यन्तानामेकशेष इति पक्षे द्वन्द्वप्रतिषेधो वक्तव्य इत्याशङ्क्यानवकाश एकशेषो द्वन्द्वं बाधिष्यत इति भाष्ये उक्तमिति । नन्वनेन भाष्येण बाध्यसामान्यचिन्तया द्वन्द्वबाधोऽस्तु । एवं च सहविवक्षायामेव प्रवृत्ते ब्राह्मणाभ्यां कृतं देहि पयोजरयतीत्यादौ एकशेष इत्यत्र न मानमत आह । किंचेति । सारवसारवोर्मिजइति । अस्मिन्प्रयोगे आरम्भप्रत्याख्यानयोः फलभेदाय पूर्वोक्तकल्पनमेव युक्तमिति भावः । न चैकशेषस्य सहविवक्षायामेव स्वीकारे इदित इति गुरुनिर्देशात्तस्यापि सहविवक्षायामेव प्रवृत्तेर्ब्राह्मणाभ्यां कृतं देहि पयोजरयतीत्याद्यनिष्टमेव स्यादत आह । असहेति । नन्वसहाविवक्षायां तन्त्रं क्व दृष्टं तत्राह । नीलोत्पलस्पर्द्धिनी नेत्रे तवेति । इष्टमेवेति । एवं चैतत्साधनार्थमेकशेषस्यासहविवक्षायां स्वीकारो न कार्यः । सारवसारवोर्मिज इत्याद्यसिद्धेरिति भावः । गौरवमिति । एवं चेदित इत्यपेक्षया लाघवाभावान्न ज्ञापकमिति भावः । तन्त्रपरइति । एकशेषारम्भवादिनामप्येवं व्याख्येयं सहविवक्षायामेवैकशेषप्रवृत्तेः । ननु तन्त्रस्य सारूप्ये एव प्रवृत्तत्वादेकशेषारम्भे त्वेकविभक्तावित्यत्रैकग्रहणादेकस्यां कस्यां चिद्व्यक्तौ सरूपाणां सर्वत्रैकशेष इत्यर्थान्मातृमातरावित्यादावप्येकशेषप्रवृत्तिर्भ्यामादौ सारूप्यादत आह । एकविभक्तावित्यत्रेति । एवापकर्षसामर्थ्यात्तद्ध्वनयन्नाह । एकस्यामपीति । नन्वत्र प्रमाणाभावोऽत आह । ध्वनितंचेदमिति । एवं च सूत्रकारेणैवैकपदवैयर्थ्यबोधनद्वारा सूत्रवैयर्थ्यं बोधितमिति भावः । द्विबह्वोरपीति । सरूपसूत्रगतद्वित्वबहुत्वयोरपीत्यर्थः । तच्छेषस्याश्रयं विना ऽसंभवात्तदाश्रयोपीति फलतीति भावः । वाचाटे नेत्त्वमिति । अत्र टस्येत्त्वे स्त्रियां ङीप् फलं बोध्यम् । अतएवदानीमइति । प्राग्दिशीयत्वेन विभक्तित्वादेवेत्यर्थः । सुःसंबुद्धिरित्युचितमिति । एवं च मात्राकृतं पदकृतं सुप इति सूत्राज्ञानकृतं च अस्मिन्न्यासे लाघवमिति भावः । सप्तमीबहुवचनेइति । इदमुपलक्षणं प्रथमैकवचनस्यापि । नन्वस्मिन्न्यासे सामन्त्रितमितिवन्महासञ्ज्ञया सञ्ज्ञाविधावपि तदन्तविधिः स्यादेकवचनग्रहणे तु तत्सामर्थ्यात्प्रत्ययस्यैव सञ्ज्ञा सिद्ध्यतीत्यत्राह । संबुद्धावङ्गस्येति । तदादीत्यंशोपस्थितिरिति । तदादीत्यत्र बहुव्रीहावप्येङन्तांशे व्यपदेशिवद्भावात्तदादिपदेन यस्माद्विहितस्यैव ग्रहणात्फलाविशेषेण लाघवात्कर्मधारय एवाश्रीयते तत्साहचर्याद्ध्रस्वांशोपि कर्मधारय एवेति कतरदित्यादौ न दोषे

इति भावः । ननु प्रकृतिं विना प्रत्ययस्यानुत्पत्तेस्तदनुपपत्तिस्तदाक्षेपेपि कस्मादेवेत्यत आह । किञ्चप्रत्ययस्येति । ज्ञाने तदपेक्षत्वाभावेनेति । उत्पादकशास्त्रे तदाक्षेपेपि शास्त्रान्तरे तदाक्षेपे न मानमिति भावः । अतएवेयन्मात्रमित्यादौ वत्वन्तात्स्वार्थे मात्रच्सिद्धिः । संबुद्धेरवयवस्यहल्लोपइति । अत्रपक्षेहल्पदानुवृत्तेः कुलेत्यादेः सिद्धिः । अन्यथाकारलोपे मश्रवणापत्तिः । न च पञ्चमीसमासेन कतरदित्यत्रापि लोपापत्तिः । पञ्चमीसमासानित्यत्वेनादोषात् । ननूभयत आश्रयणे इत्यस्य भाष्ये प्रत्याख्यानमत आह । तत्स्वीकारेपीति । ननु पौर्वापर्यघटितविशिष्टधर्मस्य स्थानिवत्सूत्रेणातिदेशोऽस्त्वित्यत आह । ताद्रूप्येति । ताद्रूप्यस्य ह्रस्वान्ताङ्गात्परसंबुद्धित्वस्यानतिदेशात् । अशास्त्रीयत्वेन न तस्य धर्मस्य स्थानिवत्त्वेन प्राप्तिरिति भावः । अन्याक्षिप्तस्यान्यत्रानन्वयइतिभावइति । इदानीं ह्रस्वसंबुद्ध्योः पौर्वापर्यानाश्रयणादुभयत आश्रयणेप्यन्तादिवत्त्वप्रवृत्तेः कुलेत्यादिसिद्धिरिति भावः । नन्वर्द्धविकारे एकदेशन्यायाप्रवृत्तौ फलाभावो भाष्यकृता क्लृप्त इत्यादौ ऋकारान्तर्गतरेफस्य लत्वे द्वित्वाद्यर्थमेकदेशविकृतन्यायेनाच्त्वमिति वदतार्द्धविकारे ऋलृक् सूत्रे स्वीकृतश्चात आह । एकवचनसञ्ज्ञासंबुद्धिसञ्ज्ञयोरिति । तत्रैतन्न्यायाप्रवृत्तिस्तु सजुषमाचष्टे सगित्यादौ रुत्वाभावार्थमवश्यमङ्गीकार्येति भावः । भाष्ये स्वीकारश्चैकदेशिन इति तत्त्वम् । सामर्थ्यादेवात्रेति । प्रत्याहारग्रहणसामर्थ्यादेवेत्यर्थः । ननु सेप्रभृतीनामित्यत्र प्रभृतिपदग्राह्यार्थं प्रत्याहारग्रहणमत आह । गुणादिति । अस्यापीति । एङ्ह्रस्वादिति लोपस्यापीत्यर्थः । एवं च प्राप्तस्य लोपस्य लुका बाधेन लोपाप्राप्तियोग्यगुणस्याचरितार्थत्वादिति भावः । ननु प्रथमयोरित्येव सिद्धे इदं सूत्रं व्यर्थमित्याह । राममित्यादाविति । आदिना तुभ्यमित्यादेः संग्रहः । द्विमात्रेति । इदमुपलक्षणं रमामित्यादौ त्रिमात्रस्यापि । कित्त्वफलं त्वादिवृद्धिःस्यादिति । ननु आदिस्त्वन्धेः फलत्वे ऽञ्प्रत्यये ञित्त्वेन वृद्धिस्वरयोः सिद्धौ ककारोच्चारणं व्यर्थमिति चेन्न । कित्स्वरनित्स्वरयोः पर्यायापादनस्यापि वक्तुं शक्यत्वात् । एतान्गाः पश्येति । ननु शसो नुम् नुग्वास्तु अकइत्यनुवर्तते अकःपरस्य नुग्नुम्वा स्यादित्यर्थः । सकारस्य संयोगान्तलोपः संयोगादिलोपो वा भविष्यति पूर्वसवर्णदीर्घानन्तरमिति चेन्न । तितऊनित्यत्रैकादेशोत्तरं परादिवत्त्वेन शस एकदेशविकृतन्यायेन प्रकृतित्वस्य च सत्त्वात्सर्वत्राचः परस्मिन्नि-

ति स्थानिवत्त्वेनोभयस्य सत्त्वाच्च सत्यपि संभव इति न्यायेन पूर्वसवर्णदीर्घस्य बाध एव स्यादिति तस्मादिति वक्तव्यमेवेति दिक् । वार्तिकमतमिति । एतच्च वार्तिकमते एव णत्वार्थे अयोग वाहानामट्सु पाठस्य प्रयोजनमिति भावस्तद्ध्वनयन्नाह । भाष्येत्विति । ननु वाक्यसंस्कारपक्षे स्त्री इयतीत्यवस्थायां स्त्री इत्यस्य इयतीशब्दे परतो ऽङ्गसञ्ज्ञायां यस्येति लोपे तस्याभीयत्वेनासिद्धत्वान्नेयङ् न तदा यस्येति चेत्यपेक्षया स्त्रिया इति सूत्रे अधिकस्यापेक्षा लोपस्यापि स्त्रीशब्दापेक्षत्वादत आह । विधिग्रहणादेवभनक्तीत्यादाविति । ननु तदादिग्रहणं विनाप्यतो दीर्घ इत्यत्रारम्भसामर्थ्यादङ्गस्येत्यसंबन्धे मूलोक्तं भवामि भविष्यामि इत्यादि सिध्यतीत्यत आह । तदादिग्रहणमिति । सार्वधातुकार्द्धधातुकयोरिति तु भवतीत्यादौ सावकाशमिति भावः । न च तदादिग्रहणविधिग्रहणाभावे वैयर्थ्याद्विधिशब्दाध्याहारे सिद्धे विधिग्रहणं व्यर्थमितिवाच्यम् । तदभावे व्याप्तिन्यायाद्यः प्रत्ययो यस्मात्क्रियते तदादि यस्मिन्कस्मिंश्चित्प्रत्यये परतोङ्गसंज्ञमित्यर्थे देवदत्त ओदनमपाक्षीदित्यादौ देवदत्तोत्तरं सुपोविधानाद्देवदत्तादेः पच्छब्दान्तस्य लुङ्यङ्गसंज्ञायां देवदत्तात्पूर्वमप्यडापत्तिः । पुनर्विधिग्रहणे तु सामर्थ्यात्प्रत्यासत्त्या यस्माद्यः प्रत्ययः क्रियते तदादि तस्मिन्नेव प्रत्ययेऽङ्गसञ्ज्ञमित्यर्थेनादोषात् । ननु संप्रसारण इत्यत्र सामर्थ्यात्संप्रसारणमित्यस्य तदाश्रयं पूर्वरूपमित्यर्थः । एवं च वव्रश्चेत्यत्रोभयोरपि यणोः संप्रसारणे पूर्वस्य पूर्वरूपे निषिद्धे यणि लक्ष्ये लक्षणस्येति न्यायेन पुनः संप्रसारणाप्राप्तौ व्यर्थमत आह । किंचराजपुरुषइत्यादाविति । एषामङ्गाधिकारेपाठोव्यर्थ इति । एवं चैषामङ्गाधिकारे पाठसामर्थ्यात्प्रत्ययाप्रत्ययोरिति परिभाषाया अत्र शास्त्रे ऽनाश्रयणमर्थवत्परिभाषाया अनित्यत्वं च ज्ञाप्यते तत्फलं तु अनिनस्मन्ग्रहणे वर्णग्रहणे चानयोः परिभाषयोरप्रवृत्तिरिति । तेन प्रत्ययाप्रत्ययोरिति अर्थवत्परिभाषयाचौपगवैरित्यत्र स्यात् । न तु मध्यमैरित्यत्राकारस्याप्रत्ययत्वादनर्थकत्वाच्चेति न चोदनीयमित्यलम् । चतुर्थ्येकवचनस्यग्रहणंव्याख्यानादिति । अवयवे च प्राणीति निर्देशात्प्रतिपदोक्तत्वात्सर्वनाम्नः स्मा इत्यत्रार्थाधिकारानुरोधाच्चेत्यर्थः । कार्यस्यनिमित्तमिति । वाचि ह्रस्वश्चेत्येव सिद्धे वामि ङिति ह्रस्वश्चेति सूत्रद्वयारम्भेणास्या ज्ञापितत्वात् । ज्ञापकस्य सजातीयाविषयत्वादित्यर्थः । न च वाचि ह्रस्वश्चेत्यत्रोभयोरनुपादानात्कथं साजात्यादेतदर्थलाभ

इति वाच्यम् । सर्वानुवर्त्तकचकारोपादानात् । तन्मते इकोचि विभक्तौ अतोभिस ऐस् बहूनि त्रीणि अजैरित्युदाहरणानि । नाग्रहइति । अस्या उपजीव्यविरोधन्यायमूलकत्वाज्ज्ञापकस्य भाष्यानुक्तत्वाच्चेति भावः । अक्रुत्सार्वेति दीर्घेणोपपत्तेरिति । न यासयोरिति ज्ञापकात्संनिपातलक्षणविधावुपात्तरूपस्य तद्विघातकविधावुपादाने एव परिभाषायाः प्रवृत्तेरक्रुत्सार्वेत्यत्र तदभावान्नपरिभाषाप्रवृत्तिरिति तदाशयः । तन्मते परिभाषाया उदाहरणं तु निकुचित इति । तत्र हि कित्त्वनिमित्ते नलोपे उदुपधादिति कित्त्वप्रतिषेधाभावाद् गुणाभावः । तस्यापीति । कृन्मेजन्तइति । कृन्मेजन्त इति सूत्रे भाष्ये परिभाषाप्रयोजनकथनावसरे शतानीत्यादेरप्युदाहृतत्वेन तादृशानुगमस्याप्रामाणिकत्वान्न यासयोरिति तु तदनित्यतामात्रज्ञापकमिति भावः । असुप्वेवेति । तेनोरुयेत्यादौ न दीर्घ इति भावः । नुमापत्तेरिति । वार्णपरिभाषया परत्वेन वेत्यर्थः । न च वार्णपरिभाषायाः समानस्थानिकत्वे एव प्रवृत्तेरन्तरङ्गत्वाद् गुण एव भविष्यति इति न दोष इति वाच्यम् । एवं हि गुणेन्तरङ्गे बहिरङ्गस्येगागमस्यैवासिद्धत्वापत्तेः । चत्वोंत्तरंद्वित्वमिति । टाङसीति सूत्रे आदिति च्छेदः । तेनाङ्गुण इत्यादौ तपरसूत्रं न प्रवर्त्तते । अत्रार्थे एवोपसर्गाद्धतीति तपरत्वं लिङ्गमिति भावः । ननु ह्रस्वनद्याप इति पञ्चमी कुतः षष्ठी नेत्यत आह । नामीतिलिङ्गादिति । सामान्येन नुड्विधेय इति । आमीत्यस्य षष्ठ्या विपरिणामस्तु नामीति लिङ्गादिति भावः । षट्चतुर्भ्यश्चेत्यत्र चतुःसाहचर्यात्षट्संज्ञको ऽकृत्रिमसंख्यावाच्येव गृह्यते तत्साहचर्याच्चतुःशब्दोपि हलन्त एव गृह्यते इत्यत आह । हलन्ताच्चेदिति । अङ्गस्येतिकिं चर्मणामिति । अङ्गाधिकारे ऽतो भिस इत्यादेः पाठादर्थवद्ग्रहणे इत्यस्या अनित्यत्वादित्यर्थः । नामाचष्टे प्रनामित्यपि प्रत्युदाहरणं बोध्यम् । षट्चतुर्भ्य इति सिद्धमिति । अत्र पक्षे त्रिसाहचर्याच्चतुःशब्दो ऽजन्तोपि गृह्यते एतदर्थमेव षडित्यत्र त्रेरित्यनुवृत्तिरुक्ता न तु ह्रस्वनद्याप इत्यत्रेति भावः । ननु कष्टायेति निर्देशात्सुपिचेति दीर्घे कर्तव्ये परिभाषाया अनित्यत्वमस्तीत्यत आह । कृताकृतप्रसङ्गित्वादिति । ष्णान्ता षडिति। रेफं प्रश्लिष्य षट्चतुर्भ्यश्च षट्त्रीत्यनयोश्चतुर्ग्रहणं न कर्तव्यं षड्भ्यो लुगर इति न्यासात्तु चत्वार इत्यादौ न लुगित्येवं वादी शङ्कते । यत्त्विति । साहचर्यस्य प्रयोजकाभावादजन्तयोरपि षट्शब्देन कतिचतुरोस्तत्र ग्रहणादिति भावः ।

अप्रवृत्तेरिति । लौकिकैकदेशविकृतन्यायेन कृतदीर्घेपि षट्त्वस्य सत्त्वात्संनिपात-विघाताभावेनेत्यर्थः । एतन्न्यायस्याशास्त्रीयेपि प्रवृत्तिरिति भावः । न तिसृचत-सृत्यकरणेनेति । यद्यपि यथान्यासेपि तिसृणामित्यत्र संनिपातपरिभाषया दीर्घा-प्राप्ते स्तिसृ इत्यस्यकरणं तथापि नग्रहणचतसृग्रहणयोरकरणेनेत्यर्थः । दिगिति । दिगर्थस्त्वनस्त्रइत्यादौ दोषाज्ज्ञापकमेवेति । सूक्ष्वित्याद्यर्थमिति । आदिना प्राङ्षु प्राङ्क्षु इत्यस्य संग्रहः । लिङ्गाच्चेति । चो हेतौ न तु समुच्चये । अनु-वृत्ताविति । न तु षत्वाभावे । महाविभाषासंबन्धस्यावश्यकत्वेनेति । तयादेशे उभयप्रतिषेध इति वार्तिकमते तयादेशस्यायचः सत्त्वात्तद्विधौ तत्संबन्धे बाधका-भावेन विग्रहस्य सत्त्वादत्र मतेपि फलाभेदाय तत्संबन्धस्यावश्यकत्वेनोति भावः । रूपवादेरस्मादनभिधानमेवेति । के द्विवचनपरता वक्तव्येति मतेपि रूपवादिष्वयचः प्राप्तेस्तत्प्रत्याख्याने ऽप्राप्तेरिति भावः । कथमिति । कस्याज्ञाताद्यर्थमात्रबोधक-त्वेन द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वरूपद्विवचनाभा-वादिति भावः । प्रकृतितोविशिष्टाभवन्तीति । अज्ञाताद्यर्थानां प्रकृत्यर्थाविशेषण-तयैव बोधादज्ञाताद्यर्थविशिष्टेर्थे वर्तमानात्प्रातिपदिकात्कादयः प्रत्यया भवन्ती-त्यर्थे विनिगमनाविरहात्सर्वार्थानुवादकत्वेनोक्तरूपाद्विवचनत्वमिति भावः । ननु सर्वादीनीत्यस्यैव महासंज्ञया सर्वार्थबोधकत्वनिमित्तता । अस्य तु तत्साहचर्यान्न संज्ञोपसर्जनयोः प्रवृत्तिः । एवं चैतस्य नार्थानिमित्तता त आह । अर्थकृतेति । ननु निषेधाश्च बलीयांस इत्यस्य सामर्थ्यमूलकत्वं, प्रकृते तु न सामर्थ्यं द्वितयादेः सार्थक्यात्तदाह । किंचनान्तरङ्गंबलीयइत्यस्येति । बहुशस्तथादृष्टत्वादिति । ग्राम-णीरित्यादावित्यर्थः । ननु प्रथमे इत्यादौ सर्वनाम्नो विहितत्वासिद्धये प्रकृतेपि जसीति विषयसप्तमी । एवं चोभयोः समकाले एव प्रवृत्तिरत आह । जसीतिविषय-सप्तमीतिपक्षेपीति । ननु जस्विषये उपप्लुताया नित्यसंज्ञाया वैयर्थ्यमिति चेत्त-र्ह्यत्रापि तुल्यमित्यत आह । स्थानिवदिति । नन्वन्तरङ्गविषये बहिरङ्गमसिद्धमि-त्येव परिभाषार्थः । एवं च तथा प्रापितया स्थानिवद्भावप्रापितायाः परत्वाद्बाध एवेति न दोषोत आह । प्रत्यक्षस्येति । एवं चोभयोस्तुल्यबलविरोध एव नेति भावः । ननु कार्यकालपक्षे जस्युत्पत्त्यनन्तरमेव नित्यसञ्ज्ञायाः प्रवृत्त्योभयोः सम-कालत्वमेवेति न दोषोऽत आह । सर्वनामसंज्ञायामिति । उक्तयुक्त्येति । सर्व-

नाम्नो विहितत्वेन शीभावरूपसिद्धये इत्यर्थः । अयच्प्रत्ययान्तरमिति भाष्यस्य द्वित्रिभ्यां तयस्येति सूत्रे एव तयस्येति न वक्तव्यमित्याशयं मन्वान आह । द्वित्रिशब्दप्रकृतिकायजन्तस्येति । तदाशयइति । केन चिदुक्त इति शेषः । अत्रारुचिबीजं तु कर्तृकर्मणोः कृतीति सूत्रस्थस्य धातोश्च द्वये प्रत्यया इति भाष्यस्य विरोधतेति । तस्मादुभाद्युदात्त इतिसूत्रे तयस्येति नानुवर्त्तत इत्येव भाष्याशय इति तत्त्वम् । नामपदस्वारस्येनेति । नमयन्त्यन्यार्थं विशेषणीकुर्वन्तीति व्युत्पत्त्येति भावः । अभिव्यक्तेतिन्यायमूलकमिति । अभिव्यक्तेति न्याय इव मूलं यस्य तदित्यर्थः । सर्वनामसंज्ञायाः संज्ञाभूतेषु सर्वादिष्वप्रवृत्तिस्तु सर्वार्थबोधकत्वाभावादेवेति भावः । एतेन परिभाषेन्दुशेखरेण सहास्यग्रन्थस्य विरोध इत्यपास्तम् । ननु लोहितोष्णीषा इत्यादौ एकपदोपस्थाप्ययोरपि तथान्वयदर्शनादिदमयुक्तमत आह । रूढ्यर्थयोगार्थयोरिति । एतेनेति । वक्ष्यमाणेनेत्यर्थः । ननु महासंज्ञाया अनुपपत्तिरत आह । आक्षिप्तस्येति । इतरविशेषणत्वेनार्थोपस्थापकत्वमिति । न तु शास्त्रीयमेवेति भावः । प्रकृतसूत्रेइति । न बहुव्रीहाविति सूत्रे इत्यर्थः । तत्र ह्युपसर्जनप्रतिषेधेन गतार्थत्वं स्वीकृत्य बहुव्रीहिपदस्य तदर्थे वाक्ये लक्षणाया आश्रयणात्प्रतिषेधे भूतपूर्वस्योपसंख्यानमित्यस्य प्रत्याख्यानाच्च । शास्त्रीयोपसर्जनग्रहणे ह्येकद्वा इत्यर्थं सूत्रस्यान्यपूर्वार्थं वार्तिकस्य चावश्यकत्वात्तदसंगतिरिति दिक् । ननु न बहुव्रीहाइत्यत्रोक्तायाःस्मृत्याः प्रकरणविषयत्वेन मानमत आह । किंचेति । एतेनेति । अकच्स्वरावित्यस्य प्रकरणविषये स्वीकारेणेत्यर्थः । ननु सा स्मृतिर्न बहुव्रीहावित्येतद्विषयिकैवास्तु, एवं च द्वन्द्वे चिकीर्षिते इत्यर्थेफलमस्तीत्यत आह । जसाधारेशीभावेएवेति । एषा तु संनिपातलक्षणविधिविनेति । वामि ङिति ह्रस्वश्चेति ज्ञापकसाजात्यादिति भावः । मानाभावादिति । असतिबाधके प्रमाणानां सामान्ये पक्षपाताज्ज्ञापकस्य भाष्यानुक्तत्वाद्वक्ष्यमाणभाष्य, टाङसीतिसूत्रस्थकैयटविरोधाच्च तादृशनियमे मानाभावादिति भावः । अतएव । ह्रस्वनद्यापइत्यनेन जराणामित्यत्र पूर्वविप्रतिषेधात्पूर्वं नुटि जरसोभावादेव । ङ्याब्ग्रहणेऽदीर्घइति । अधिकरणे ल्युट् । ङ्याब्घटिते कार्ये दीर्घभिन्नस्तादृशो ह्रस्वादेशो न स्थानिवदिति तदर्थान्न तेन जरसोग्रहणमिति भावः । व्याख्यानादौटष्टकारेणेति । स्वादिष्विति सूत्रे ऽसर्वनामेति पर्युदासान्नागमः । नापि टाटकारेण औट-

ष्टकारवैयर्थ्यादिति भावः । प्रथमैकवचनमिति । असर्वनामेति पर्युदासान्नसप्तमीव-हुवचनमिति भावः । व्याख्यानादिति । आदिग्रहणरूपात् । अन्यथा सुपीत्येव वदेदिति भावः । तेनव्यवस्थेति । परत्वादिनेत्यर्थः । अयं भावः । एकेनेत्यनेन विरोधे बोधिते तत्तत्सूत्रादिनैव बाधसिद्धिरिति । तत्कार्ययोरिति । सुप्तिङ्विभक्त्योरित्यर्थः । एवं च गां दोग्धीत्यत्र परत्वात्पञ्चमी, गौर्दुह्यत इत्यत्र कर्मणि लकारयोः पर्यायापत्तिरिति भावः । नलोपापपत्तिरिति । अल्लोपोन इत्यत्राद्ग्रहणं त्वान इत्यत्र लोपाभावायेति भावः । बाधसामान्येति । अत्र प्रमाणं तु प्रकृत्या के राजन्येति निर्देश इति भावः । यथोद्देशपक्षे एवेति । आकडारेत्यारम्भादित्यर्थः । नपर्यायइति । न च पर्याय इत्यसङ्गतं भपदसञ्ज्ञाभ्यां नित्यमेव बाधादिति वाच्यम् । नामीत्यारम्भसामर्थ्येन पर्यायबोधनोपपादनादित्यलम् । तेनोभयत्रेति । तेनेति पञ्चमीसमासे नेत्यनेन समानाधिकरणम् । व्याख्यानेतुनमानमिति । प्रविगणय्येति न मानमित्यर्थः । भवतेर इत्यादि निर्देशोपि तदनित्यत्वे एव मानमिति बोध्यम् । अन्यथा न धात्वित्यस्य प्रत्याख्याने लोलुव इत्यस्याप्यसिद्धिः स्यादिति भावः । इत्याहुरिति । अत्रारुचिबीजं तु गुणानां च परार्थत्वादिति न्यायेनाव्यवहितादित्यर्थालाभः प्रत्यैषिषन्नित्यस्यासिद्धिर्भवतेर इति तदनित्यत्वे मानं चेति । अतिदेशान्तराणामिति । स्थानिवदादेशः, अन्तादिवच्च, एकदेशविकृतमनन्यवत्, स्थानिवदित्यनुवृत्त्याप्रत्ययलोपे इत्यादीनामित्यर्थः । वतिघटितानामिति । तेन वत्यघटितस्यासिद्धं बहिरङ्गमित्यस्य, समानजातित्वातिदेशबोधकस्य ऋलृवर्णयोरित्यस्य चाप्रवृत्तिरिति भावः । न लोपः प्रातिपदिकान्तस्य । प्रातिपदिकान्तस्य सतःपदान्तस्य नस्य लोप इति सूत्रार्थस्तेन बहुदण्डिकेत्यादौ नलोपसिद्धिरिति बोध्यम् । वार्तिकस्यवैयर्थ्यापत्तेश्चेति । शब्दत्वेन साहश्यग्रहणे पद्दन्निति सिद्धे यत्तस्क्षुद्रेषु नस् शब्दस्यैव प्रयोग इत्यर्थेनैवास्य सार्थक्यान्नित्ये सिद्धे नासिकाया इत्येतद्घटितवार्तिकस्य वैयर्थ्यापत्तेरिति भावः । अन्यत्र । सुटि । अतएव । प्रयोगस्य क्वाचित्कत्वादेव । तस्याअसम्भवेनेति । प्रकृत्यैकाजिति सूत्रस्थभाष्येणैकाच्केभ्यो णिचो नुट्सूत्रस्थभाष्येण हलन्तेभ्य आचारक्विपश्चानभिधानात्तत्राप्रयोगार्थं तन्नेति भावः । तत्त्वेपीति । अनादेशत्वेपीत्यर्थः । चेनविजिति । आतोमनिन्नित्यत्र चेनानुवृत्तो ऽन्येभ्योपि दृश्यन्त इत्यनेनात्रेति भावः ।

ननु क्वावुपसंख्यानमिति तत्प्रत्याख्यानभाष्याभ्यां लोपोव्योरिति वकारप्रत्याख्यानाच्च विचो ऽसार्वत्रिकत्वबोधनादत्र विजयुक्तो ऽत आह । सचेति । तादृशभाष्याद्य-कारवकारान्तेभ्यो धातुभ्य एव विचो ऽनभिधानमिति भावः। संकोचे प्रमाणमाह। कीलालपआगतमिति । ननु स भाष्यप्रयोगः क्विपि सिध्यतीत्यत्राह । क्विपस्त्विति। ननु धीरित्येतत्सिद्धये भाष्ये ध्यायतेः क्विवङ्गीकारो ऽत आह । भाष्यानुक्त-क्विभ्यइति। अतएव । आदन्तेभ्यः क्विपो ऽनभिधानादेव । अतएवेति । आद-न्तेभ्यः क्विपोऽभावादेवेत्यर्थः । केचिदिति । भाष्यतत्त्वविद इत्यर्थः। आहुरिति । अत्रारुचिवीजं त्वीत्वप्रसक्तिरिति । अत्रेति । गौर्यावित्यादाविति भावः । इचि-पूर्वेण गतार्थत्वादाह । जसीति । लोपेननुड्बाधकेनेति । रामाणामित्यादौ त्वन्तरङ्ग-परिभाषया वा न लोप इति भावः। आचारक्विवन्तादिति । एवं च योगविभागो व्यर्थ इति तदाशयः । नन्वाचारक्विवन्तात्कर्तृक्विपो भाष्येऽनुपन्यासेपि तदविरो-धाच्छास्त्रप्रवृत्तेरबाधकत्वान्नानभिधाने मानमत आह । लाभाच्चेति । आतो धातोरनाप इति सूत्रवार्तिकन्यासाभ्यां ज्ञापितत्वादिति भावः । स्पष्टतयेति । गत्र्यापत्यै इत्यादौ नदीसञ्ज्ञायाः सावकाशत्वेप्युकारसाहचर्यादिकारान्तस्याप्य-नदीसञ्ज्ञकस्यैव ग्रहणमिति भावः । तात्पर्यग्राहकमिति । तेन पित्रेत्यादौ नेति भावः । एतेन प्रमाणफलोभयविषयकप्रश्नस्यापि समाधानमिति दिक् । अत्यन्तज्ञा-नगौरवमिति भावः । तात्पर्यग्राहकमिति । अमुष्मै इत्यादौ तु न दोषः । नासा-हचर्येण टानिमित्तकनकारस्यैव ग्रहणमिति भावः । ननु हरिणेत्यत्र सत्यपि संभवे इति न्यायेन नादेशेन गुणबाधान्न दोषोत आह। मत्येत्यादाविति। वार्तिकमतेपीति। तस्मिन्नेवात्र सत्यपीति भावः। मते इत्यस्य एवात्र सतीति शेषो बोध्यः। अनापत्तेरिति। ङेर्ङामिति न्यासे तु ङस्येत्सञ्ज्ञालोपयोः स्वीकारेण ङस्योच्चारणेनार्द्धमात्राधिक्येन सर्वत्र भूतपूर्वगत्या ङादित्वस्वीकारेण च गौरवापत्तिः स्यादिति भावः । ङसिङ-सोश्च । ङितश्चेति नासूत्रि । ऋत उदित्यत्र ऋदन्तान्ङितो ऽति परे इत्यर्थे जाग्र तीत्यादौ दोषापत्तेः । ध्वनितस्तदभावइति । नाम्नलोप इति न्यासे नन्दिता नन्दक इत्यादौ दोषोद्भावनमिति भावः । शेतिसमुदायस्येति । अलोन्त्यस्येति परिभाषा तु नानर्थक इति निषेधान्न प्रवर्तत इति भावः । पञ्चम्यन्तात्ग्रहणादिति । लाघवा-दलनन्त्य उपधेत्येव सिद्धे इत्यादिः । शस्यनेति । अनन्त्यविकारे ऽन्त्यसदेशस्येति

परिभाषया प्रकृते ऽकारस्यैवेत्वं भविष्यतीति न दोष इति चेद् गणयतीत्यादौ गकाराकारस्य वृद्धिवारणाय पञ्चम्यन्तात्ग्रहणमिति बोध्यम्। नोपधाया इति उपधाग्रहणानुवृत्तिफलं तु कृत्स्नमाचक्षते इति ण्यन्तात्क्वौ णिचि णिलोपे कृत्स्नावित्यादौ दीर्घाभावः। पृथक्पदमिति। न तु सुतिसीत्यस्यापृक्तपदेन कर्मधारयः। तथा सत्यपृक्तपदस्य विशेषणत्वेन पूर्वनिपातापत्तेः । प्रतिपदोक्तपरिभाषानाश्रयणेनैवेति । लिङ्गविशिष्टपरिभाषयातिदिष्टसखिशब्दत्वं तु प्रकृते न, विभक्तौ लिङ्गविशिष्टाग्रहणमिति निषेधात्। ननु शदन्तपर्युदासेन संख्याया अतीति सूत्रे एव कृत्रिमाकृत्रिमन्यायाप्रवृत्तिःस्यान्न तु सर्वत्रेत्यत आह । किंचेति। अतएव । संख्याप्रदेशे उभयगतेरेव। एतन्न्यायेति। कृत्रिमाकृत्रिमन्यायेत्यर्थः। एवं वत्वन्तेपीति। परिभाषार्थवाचकतयेत्यर्थः। ननु नियतविषयपरिच्छेदहेतुत्वस्यैव संख्यात्वमिति नियमाभावे इदं संख्यासञ्ज्ञासूत्रं व्यर्थं स्यादत आह। यद्वेति। सूर्यादीनामिति। आदिना स्फिरभूयसोर्ग्रहणम्। नियमंशरीरे लाघवायाह। यद्वेति। नन्वेवमनन्तवाचिशतशब्दस्य संख्याकार्यं न स्यादिष्टापत्तिस्तत्राह। अनन्तशब्दादिति। ननु सञ्ज्ञाविधाविति निषेधात्संख्यासञ्ज्ञाया डतेरेव सत्त्वेन डत्यन्तेत्यसङ्गतमत आह। अतएवेति। संख्यासञ्ज्ञायां तदन्तविधेरेवेत्यर्थः। डडनुवादेनेति। अन्यथा तस्यपूरणे इत्यत्र प्रातिपदिकाधिकारात्प्रातिपदिकसञ्ज्ञकात्संख्यावाचकाड्डडित्यर्थे ऽत्र तदप्राप्त्या ऽसङ्गतिः स्पष्टैवेति भावः। ननु संख्यासञ्ज्ञायां तदन्तविधावपि षट्सञ्ज्ञायां कथं तदन्तविधिरत आह। अतएवेति। संख्यासञ्ज्ञायां तदन्तविध्याश्रयणेन संख्येत्यस्य प्रकृते ऽनुवर्तनादेवेत्यर्थः। द्वित्वंनेति। इदमुपलक्षणं जुहोतीत्यादौ उतो वृद्धिरिति वृद्धि,हरीतक्याः फलानि हरीतक्य इत्यादौ लुक्तद्धितेति स्त्रीप्रत्ययस्य लुक्, श्राविष्ठासु जातः श्रविष्ठ इत्यादौ लुपि युक्तवदिति लिङ्गवचने इत्यस्यापि। वार्तिककारमतेनाह। प्रत्ययस्येत्यनुवृत्त्येत्यादिना । भाष्यकारमतेनाह। स्थानिवत्सूत्रेणेत्यारभ्य विस्तर इत्यन्तेन। इहापीति। कार्यातिदेशेपीत्यर्थः। ननु राजपुरुषे भसञ्ज्ञा वार्तिकमते प्रत्ययलक्षणेन प्राप्तापि भाष्यमते ऽल्विधित्वादप्राप्तिरत आह। आदाविति। आदिना यशस्विनमाचष्टे यशा इत्यादिसंग्रहः। तृज्वदितिसूत्रे। तृज्वत्त्वविधायके स्त्रियां चेति सूत्रे इत्यर्थः। अर्थत उरदत्त्वस्य परनिमित्तत्वं साक्षाच्छब्दतस्तु अङ्गसञ्ज्ञाद्वारा परम्परयेत्यर्थः। तत्रार्थः साक्षादुरदत्त्वस्य पर-

निमित्तत्वमाह । नियमतःपरवृद्धेरिति । पूर्वकालवृत्तितयेत्यर्थः । अतएवेति । आक्षेपेण प्रत्यय इत्यस्योरदत्त्वे साक्षात्परनिमित्तत्वाङ्गीकारादेवेत्यर्थः । लिव्यभ्यासस्येति सूत्रस्थभाष्ये स्थानिवत्त्वे एव कर्तव्ये शब्दतः परम्परयार्थतः साक्षाद्वा परनिमित्तकविधेरेवाश्रयणमिति भावः । ननु कार्यकालपक्षे ऽङ्गसञ्ज्ञासूत्रस्याङ्गाधिकारे उपस्थित्या प्रत्यय इत्यस्यावृत्त्या चोरदत्त्वस्याचि श्नु इत्यस्य चापि प्रत्ययनिमित्तत्वं स्त्रियां चेति सूत्रे त्वावृत्तिर्नाश्रीयते उरदत्त्वे न लुमतेति निषेधस्यानित्यत्वं चाश्रीयते इत्येव भाष्यतात्पर्यमस्त्वित्यत आह । आकडारेति । ननु न लुमतेत्यस्यानित्यत्वं न युक्तं प्रकारान्तरेण निर्वाहादत आह । अङ्गाक्षिप्तेति । ननु त्रेरयङ्ङिति न्यासे ङस्येत्सञ्ज्ञालोपयोः कल्पनेन त्रयादेशे ऽधिकैकमात्रोच्चारणेन समत्वेपि त्रयादेशेऽत्रत्ये सान्तत्वाभावे निर्देशाश्रयणेन गौरवात्त्रेरयङ्ङित्येव न्यासः कर्तव्य इत्यत आह । त्रेरयङ्नकृतइति । शङ्कावारणायेति । एवं चायङ्पक्षेपि निर्देशाश्रयणमावश्यकमिति न त्रयादेशापेक्षया लाघवमिति भावः । अप्रसिद्धत्वगौणलाक्षणिकत्वान्यतररूपेति । परिभाषायामीदृशगौणत्वस्यैव ग्रहणं तेन णिजन्तात्क्विपि टिणिक्विलोपे शृङ्गशब्दाच्छृङ्गवृन्दाभ्यामारकन्भवति । पदकार्य एवतत्प्रवृत्तेश्चेति । प्रातिपदिकप्रकृतिकसुप्त्वसमानाधिकरणधर्मावच्छिन्नानिमित्तकपदस्य कार्य एव गौणमुख्यन्यायप्रवृत्तेश्चेत्यर्थः । आत्वयत्वलोपैर्वाधादिति । जातस्यापि परत्वेनात्वस्य पुनः प्रसङ्गविज्ञानेन प्राप्तैस्तैरपहारादित्यर्थः । अभ्युच्चयायेति । अधिकोपन्यासेन समाधानस्य व्यापकत्वबोधनेन स्पष्टप्रतिपत्तये इत्यर्थः । भाष्यप्रामाण्येनेति । इकारान्तसप्तम्या असंभवप्रतिपादनपरभाष्यप्रामाण्येनेत्यर्थः । आवश्यकमिति । अन्यथा प्रत्याख्यानपक्षे वार्णादाङ्गमिति न्यायेनाप्टक्तलोपात्पूर्वमीत्वं स्यादिति भावः । ननु स्थः क चेति चेन क्विपो विधानाच्छंस्था इति भाष्ये उदाहृतत्वाच्च वार्णपरिभाषाया अनित्यत्वमेव वार्तिकप्रत्याख्यानपक्षे प्रतीयते न तु अनभिधानमित्यत आह । शंस्थाइत्यत्रविजेवेति । चेन विजेव विधीयत इति सूत्रभाष्याभ्यां परिभाषानित्यत्वं न युक्तमिति भावः । नन्वेवं वातप्रमीशब्दस्य क्विबन्तस्यासिद्धिरेव स्यादत आह । मीङ्मानइति । एके इति । मुख्या इत्यर्थः । व्याख्यानादिति । भाष्ये वा च्छन्दसीत्यनेनात्र पूर्वसवर्ण इत्युक्तरूपादित्यर्थः । यूकिमिति । स्त्र्याख्यौ नदी नेयङुवङ्स्थानावस्त्री वामि ङिति ह्रस्वश्चेति यत्तु वक्तव्यं

ङिति ह्रस्वइतीति ङित्येव ह्रस्वो नदीति नियमार्थं विपरीतनियमस्त्वाण्नद्या इति निर्दे-शान्न, ह्रस्वनद्याप इत्यात्रग्रहणज्ञापकादाकारान्तेषु नदीत्वं नेति ज्ञापनादाबन्तेषु, स्त्रीत्वाभावाददन्तेषु, नियमादिदुदन्तयोश्च न दोष इति प्रश्नः। केचिदिति। अत्रारु चिवीजं तु अवयवस्त्रीविषयत्वात्सिद्धमिति प्रकृतसूत्रस्थभाष्यष्यङ:संप्रसारणमितिसू-त्रस्थभाष्याच्चाकडारीयसञ्ज्ञानां कार्यकालत्वेपि न स्वदेशत्याग इति न बाध्यबाधक-भावांशे ऽनुपपत्तिरिति। अम्बेत्यादावनापत्तिरिति। एवं च ङलकवतां ह्रस्वो नेति वच-नारम्भादत्रेक्परिभाषानुपस्थितिरिति भावः। सप्तम्येकवचनंव्याख्यानादिति। स्त्रियामि-ति निर्देशादित्यर्थः। ननूङ् च गमादीनामिति निष्पन्नस्य भ्रूशब्दस्य धातुत्वादेव सिद्धिरत आह। भ्रूशब्दइति। यण्निषेधारम्भेणेति। यण इको यणिति यणोनिषेधो बाधस्तस्य कर्तेयङ् तस्यारम्भेण प्रवर्तमानेनेत्यर्थः। शाकपार्थिवादित्वात्कर्तृशब्दस्य लोपः। ननु या चासौ क्रियेति विग्रहे तं प्रतीत्यत्र तच्छब्दस्य तद्वाचके लक्षणेति गौरवमत आह। यद्वेति। किञ्चेति। किं त्वित्यर्थः। आरम्भेपीति। अपिना प्रत्याख्याने। अभ्युच्चयेन। समुच्चयेन। न तु मतभेदेन समाधानद्वयमिति बोध्यम्। सामान्यापेक्षेति। क्ये सुबन्तं यदीत्याकारकेत्यर्थः। न तु हलन्तं यदीति विशे-षापेक्षेति भावः। अस्यापवादत्वादिति। अन्यथा सुत्यावित्यादाविकोसवर्ण इति शाकलं स्यादिति भावः। ननु पदान्तस्य स्थाने विधौ नेत्यर्थेऽत्र पदत्वाभावा-न्निषेधाभावेपि पदान्ते विधातव्ये नेत्यर्थे निषेधो दुर्वारः। संप्रति पदत्वाभावेपि जाय-मानस्य यणः पदचरमावयवत्वादत आह। परपदस्थेति। अनित्यत्वादिति। यलोपे कृते ऽकृते च यणो ऽप्राप्तत्वादित्यर्थः। एवं च समकालप्राप्त्यभावेन पूर्वोपस्थितिकमन्तरङ्गमित्यस्य विषयाभावादिति भावः। गोमानितिभाष्योक्तेरिति। अन्यथा कृतदीर्घस्य तत्स्थानापन्न इति न्यायेन स्थान्यचः पूर्वत्वात्क्यचो ऽकार-स्य स्थानिवत्त्वेन नुम् न स्यादिति भावः। गौणमुख्यन्यायवदिति। अभिव्यक्त-पदार्था इति न्यायस्य गौणमुख्यन्याय एवान्तर्भाव इति भावः। व्याख्यानादिति। कार्यशास्त्रनिमित्तव्यवहारातिदेशेषु प्रतिपदोक्तस्य तृच्छब्दमुच्चार्य विहितकार्य-स्यैव ग्रहणापत्तौ स्त्रियां चेत्यस्य वैयर्थ्यादर्थतादात्म्यातिदेशयोरसंभवरूपादित्य-र्थः। ननु प्रतिपदोक्तपरिभाषाबाधेनापि स्त्रियां चेत्यस्य सार्थक्यमत आह। प्रा-धान्याच्चेति। ननु रूपातिदेशे स्वरातिदेशो न स्यादत आह। तच्चेति। उदात्त-

विशिष्टातिदेशे प्रमाणमाह । चकारोच्चारणादिति । तत्सामर्थ्यादित्यर्थः । तेनक्रोष्ट्रेत्यादाविति । क्रोष्ट्रेत्यादौ तु न दोषः । प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या शास्त्रकार्यव्यपदेशातिदेशेष्वपि चित इत्यस्य प्रवृत्तेः । क्रोष्ट्रेत्यादौ तु शास्त्राद्यतिदेशेषु विभाषातृतीयादिष्वचीत्यत्र तृतीयादिष्वचीत्युक्तत्वात्प्रत्यासत्त्या तृतीयादिविभक्त्यनन्तरनिमित्तककार्यस्यैव तेनातिदेशापत्त्या चित इति स्वरस्यानापत्त्या दोष इति भावः । इत्यन्येइति । एवं च नेप्ट्रादिग्रहणमत्र मते सूत्रे न कार्यमिति भावः । तेइति । हरिदीक्षिता इत्यर्थः । अन्यप्रयोगस्येति । होतृपोतृनेष्टोद्गातार इत्यस्येत्यर्थः । अस्य । उद्गातारावित्यत्य । भाव्यमानस्यापीति । उकारस्येति शेषः । क्वचिदिति । अदसोसेरित्यत्रेत्यर्थः । तेन सनाशंसेत्यत्र तनादिकृञ्भ्य इत्यत्र च न सवर्णग्रहणमिति भावः । पुमान् स्त्रियेतिनिर्देशादिति । खर्परे शरीत्यनेन विसर्गस्य झरो झरीत्यनेन सस्य वा लोपेपि तस्यासिद्धत्वान्नस्यापदान्तत्वादनुस्वारः स्यात्संयोगान्तलोपे तु तस्य सिद्धत्वात्पदान्तत्वान्नस्यानुस्वाराभावे निर्देशसंगतिरिति भावः । वाचकसादृश्यादिति । एकदेशविकृतस्यानन्यत्वादित्यर्थः । अत्र । मतौ च्छ इत्यत्र । भुवोवुगित्यादौ विभक्तिकरणादाह । कदाचिदिति । विभक्त्यभावेपीति । सुपां सुलुगिति लुकेति भावः । सचसूत्रेष्वेवेति । न तु लौकिकप्रयोगेष्वित्यर्थः । छन्दोवत्सूत्राणीत्यनेन सूत्रेष्वेव छान्दसत्वातिदेशेन सुपां सुलुगित्यस्य प्रवृतेरिति भावः । प्रामाणिकाइति । केचित्तु भू सत्तायामिति निर्देशादेव लौकिकप्रयोगेपि क्वचिदनुकरणाद्विभक्त्यभावं कुर्वन्ति । तदयुक्तम् । निर्देशस्यान्यथोपपत्त्या तादृशार्थे प्रमाणाभावादिति भावः । तदाह । गवित्ययमाहेतीति । उत्त्वमप्यतएवनेति । तपरकरणादेवोत्त्वमपि नेत्यर्थः । अतएवेति । प्रकृतिवदित्यतिदेशस्य वैकल्पिकत्वेन पक्षे इत्वस्यभावादेवेत्यर्थः । ननु ऋकारांशे फलाभावेपि साहचर्यभङ्गेन लृकारांशे प्रवृत्त्यर्थमेव ऋकारेपि प्रवृत्तिरस्त्वित्यत आह । वस्तुतइति । ननु योगविभागेन द्वितीयसूत्रसामर्थ्येन पूर्वसूत्रस्यान्यत्र क्वाचित्कत्त्वेप्यत्र तथात्वे मानाभावो ऽत आह । सावप्रयोगएवेति । ननु योगविभागेन सिद्धावपि वार्तिकपक्षे कथं सिद्धिरत आह । उत्तरपदत्वेचेति । ननु तेनोत्तरपदत्वे निषेधेपि पूर्वपदस्य पूर्वान्तवत्त्वेनोतरपदविशिष्टस्य वा पदत्वे निषेधाभावो ऽत आह । उतरपदस्यतद्घटितस्यवेति । वार्तिकस्येदृशेर्थे प्रमाणमाह ।

अत इति । इतिकेचिदिति । अत्रारुचिबीजं तु भाष्ये एव तादृशार्थस्याकरणादप्रामाण्येन सेशब्दस्यानभिधानमिति । अयवायावादिष्विति । वृक्षयिदं, कुमार्यायिदं, वृक्षावेतावित्यादिष्वित्यर्थः । नन्वोश्चेति वक्तव्ये द्योश्चेति गुरुनिर्देशं कुर्वतो वार्तिककारस्य उपलक्षणतया व्याख्यानं नाभिप्रेतमत आह । परेत्विति । ईदृशानामिति । गोद्योशब्दातिरिक्तौकारान्तानामित्यर्थः ॥ इत्यजन्ताः पुलिङ्गाः ॥

एकादेशस्य पूर्वान्तवत्त्वेनेति । न तु लिङ्गविशिष्टपरिभाषया लिङ्गबोधकप्रत्ययज्ञानाय परादित्वस्याश्रयणेनातिदेशद्वयस्वीकारे गौरवमिति भावः । वाचेत्यत्राप एवाभावादाह । आदाविति । आदिना दामेत्यादिडाबन्तसंग्रहः । अङ्गस्येति । यस्मात्प्रत्ययाविधिस्तदादीत्यर्थः । प्रतिपदोक्तत्वेनेति । निरवकाशत्वरूपेणेत्यर्थः । अनित्यत्वादिति । गुणात्संबुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात्संबुद्धिलोपे तस्या अनित्यत्वादित्यर्थः । व्याख्यानादिति । ङित इत्यस्यागमापेक्षया ऽवयवषष्ठ्यन्तत्वेन स्थानषष्ठ्यन्तत्वासंभवरूपादित्यर्थः । सोर्लोपउक्तइति । अन्तादिवच्चेति सूत्रे भाष्यकारैः । एकदेश्युक्तित्वेपीति । व्यपवर्गाऽव्यपवर्गसाधारणेऽन्तवद्भावस्यैकदेश्युक्तित्वे ऽपीत्यर्थः । सिद्धान्तिसंमतत्वाभावादिति । अव्यपवर्गे प्रकृते तद्भावस्य सिद्धान्तिसंमतत्वाभावादित्यर्थः । एकदेशिमतेपि प्रकृतेनिर्वाहमाह । परेत्विति । सर्वनामत्वमिति । लिङ्गविशिष्टपरिभाषया सर्वादित्वातिदेशात्सर्वादीनीत्यनेनेत्यर्थः । यथाश्रुतं तु न युक्तं विभक्तौ लिङ्गविशिष्टागृहणमिति निषेधादिति भावः । अत्रमानमन्वेष्यमिति । "न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञाने सर्वं शब्देन भासते" इति । पूःशब्दसंबद्धार्थस्य विशेष्यत्वेनेत्येवार्थो युक्त इति भावः । प्रश्लेषादिति । याडापः, हल्ङ्याब्भ्य इत्यनयोरेव प्रश्लेष इति वक्ष्यमाणरीत्या तु ह्रस्वेन बाधान्नैत्वमिति बोध्यम् । निर्जरशब्देउक्तमिति । याडामेत्वानां परत्वान्नुट्श्योर्भाष्यप्रामाण्येन पूर्वविप्रतिषेधेनेष्टत्वात्तेषु कृतेषु क्व चिदजादित्वाभावात्क्व चित्संनिपातपरिभाषया जरसोऽप्राप्तिरेव चतुर्षु प्रश्लेषफलं त्वतिखट्वशब्दे, ह्रस्वनद्याप इत्यत्र प्रश्लेषस्य न फलं नापि मानमित्युक्तं तत्रेत्यर्थः । पदादयस्तु स्वतन्त्रा एव नादेशा इति पद्दन्निति सूत्रस्थभाष्यस्वरसादिति न तदर्थमपि ह्रस्वनद्याप इत्यत्र प्रश्लेष आवश्यक इति

तदाशयः । ननु ङ्याब्ग्रहणे आदेशो न स्थानिवदित्युक्तेः खट्वादिशब्दे सवर्णदीर्घस्यापि स्थानिवत्त्वनिषेधः स्यादत आह । अदीर्घइति । दीर्घभिन्नइति । खट्वाशब्दे सवर्णदीर्घः क्यजन्तकुमारिशब्दे क्यजन्तखट्वाशब्दे चाकृत्सार्वेति दीर्घभिन्न इत्यर्थः । याडादिविधायकसूत्राणि तु डाबन्ते चारितार्थानीति भावः । ननु लक्षणप्रतिपदोक्तपरिभाषास्वीकारे याडाप इत्यादि सूत्रं व्यर्थं स्यादित्यत आह । सूत्रंतुनिर्शेति । अत्र हि हलन्ताट्टाबिति भावः । ननु हलन्ताट्टाब् नास्त्येव ङ्याप्प्रातिपदिकादिति सूत्रस्थभाष्यस्वरसादित्यत आह । आदाविति । आदिना डाबन्तदामाशब्दसंग्रहः । अतएव । अङ्गस्य विशेष्यत्वादेव । नन्वतिखट्वायेत्यत्रोपायाकथनेनाङ्गस्य विशेषणत्वमेवास्तु तत्र न किं चिद्बाधकमत आह । किञ्चेति । ननु श्रविष्ठाशब्दाज्जातार्थे ऽणि तस्य लुकि श्रविष्ठाशब्दावयवस्य लुक्तद्धितलुकीति टापो लुकि फल्गुनीशब्दादणो लुकि लुक्ताद्धितेति फल्गुन्यवयवस्य ङीपो लुकि श्रविष्ठाफल्गुनयोर्हल्ङ्याद्लिोपादिवारणाय वार्तिकस्य तत्प्रत्याख्यानायाकारादिप्रश्लेषस्य चावश्यकत्वेन वैयर्थ्याभावो ऽत आह । किञ्चेति । ननु ह्वावामश्चेति ज्ञापकादाकारग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिः । अत एव कृतात्वेभ्य आतोनुपसर्ग इति के आतोलोप इटि चेति लोपस्तेषां क्विबन्तानामातो धातोरिति लोपश्च सिध्यति । एवं चातिखट्वायेत्यत्र याट् दुर्वारोत आह । किञ्चेति । परम्परया कार्यमादाय स्थानिवत्त्वप्रवृत्ताविति । अतिखट्वायेत्यत्रेत्यर्थः । मानाभावादिति । मानस्य वार्तिकारम्भतत्प्रत्याख्यानयोः फलभेदात्तथा कल्पनेपि मानाभावात् । अङ्गस्य विशेष्यत्वे प्रमाणमाह । याडापइतिसूत्रेभाष्येपीति । सुधीभिर्विचार्यमिति । उपलक्षणत्वे स्थानिवत्सूत्रे एव याडाप इत्येतद्विषये शङ्कासमाधानाभ्यां सिद्धौ पुनर्याडाप इति सूत्र एव शङ्कासमाधानाकरणेनेतरसूत्रोदाहरणानभिधानमेव युक्तमिति भावः । फणादिरेवेति । ननु भ्राशतेरेव शान्तत्वेन षत्वे विभ्राडिति रूपसिद्धौ भ्राजग्रहणं व्यर्थमिति चेन्न । भ्राजतेः क्विपि सुपरमशब्देन समासे ततो णिटिलोपे ऽवशिष्टस्य षत्वार्थं तत्सत्त्वादित्यर्थः । अत्रमते । केचिन्मते । भाष्यानुग्रहः । भाष्यसंमतिः । विचार्यः । ज्ञेयइत्यर्थः । एकाच इति सूत्रे धातुपदसंबन्धे मानाभावादिति भावः । नन्वेकदेशस्य स्वरितत्वे क्लेशो ऽत आह । यद्वेति । श्रियैब्राह्मण्यैइति । श्रीशब्दादिवार्थे कन् । तस्य लुम्मनुष्ये इति लुप् ।

यद्वा क्यजन्तात्क्विप् । एवं श्रिये ब्राह्मणयेत्यत्रापि क्यजन्तात्क्विविति बोध्यम् । तदाक्षिप्तस्येति । इयङाद्याक्षिप्तस्याङ्गस्येत्यर्थः । न्यायसिद्धे ऽर्थे लिङ्गमप्याह । यस्याङ्गस्येति । नन्वङ्गस्येत्यस्येयङादिविशेषणत्वेपि स्त्र्याख्यावित्यस्याङ्गविशेषणत्वं स्यादेवेत्यत आह । स्त्र्याख्यावित्यस्येति । ननूभयातिदेशे गौरवं स्यादत आह । यद्वेति । नन्वेतावतापि नित्यस्त्रीत्वाभावाद्विकल्पो न स्यादत आह । अत्रइति । यूकिमिति । पूर्ववाक्ये इयङुवङ्स्थानावित्यनेनेकारोकारयोरेव संभवादन्त्ये ह्रस्वाकारस्य स्त्रियामवर्त्तनात्प्रश्नः । एतत्सर्वमिति । स्त्र्याख्यावित्यङ्गस्यामीत्यनेनाक्षिप्तस्य विशेषणं तच्च स्त्रीवाचकावित्येतन्मात्रार्थकमित्यर्थः । नन्वौदित्यस्यानदीसञ्ज्ञकेष्वेव प्रवृत्तौ न मानमेवं चेद्दुद्भ्याम्, औदित्यनयोः पर्याय एव स्यादत आह । नदीग्रहणानुवृत्तेश्चेति । न्याययोरत्रासंभवादेकदेशनदीग्रहणानुवृत्तेरिति भावः । परिभाषायाअनित्यत्वादिति । वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादिति दोषेषु परिगणितत्वादिति भावः । तत्र प्रत्ययस्यातिदेशिकस्यापि ग्रहणं स्त्रियामिति निर्देशादिति बोध्यम् । ननु त्रिभार्य इत्यत्र सत्यपि तिस्रादेशे बहुव्रीहिसमासे पुंवद्भावेन तन्निवृत्तिः सिद्धेति विभक्तावित्यनुवृत्तेर्न फलमत आह । तृतीयान्तेनसमासइति । तिसृचतसृइत्यस्येति । तस्य पूर्वसूत्रे विधेयत्वेपि ऋत इत्येतत्सामर्थ्यादत्रानुवृत्त्योद्देश्यतापि संभवतीति भावस्तद्ध्वनयन्नाह । अन्यथेति । अमित्यादीति । आदिनानामः संग्रहः । त्रयाद्यादेशइति । आदिना नामीति दीर्घसंग्रहः । एवमेव तुल्ययुक्त्या नुटोपि तिस्रादेशात्पूर्वमेव प्रवृत्तिर्बोध्या । न च त्रयादेशे नुटो बाधः शङ्क्यः । निजां त्रयाणामिति निर्देशेनाबाधकत्वज्ञापनात् । तदसंगतिरिति । तिस्रादेशोत्तरं लक्ष्ये लक्षणस्येति न्यायेन पुनर्दीर्घप्रवृत्तौ न तिस्रितिसूत्रे तिसृग्रहणं व्यर्थं स्यादित्यर्थः । ननु तिस्रादेशस्य संज्ञापेक्षत्वेन बहिरङ्गत्वेपि त्रयादेशादेरपि विशेषापेक्षत्वेन बहिरङ्गत्वादुभयोः समत्वेन परत्वात्तिस्रादेशे न तिस्रित्यस्य सार्थक्येन संज्ञार्थकृतबहिरङ्गत्वानाश्रयणे मानभावेनातितिस्रिणे इत्यत्र नुमपेक्षयान्तरङ्गत्वादियङापत्तिरत आह । वस्तुतइति । एवं चैतन्निषेधसामर्थ्यं सुस्थमिति भावः । नन्वेवमप्यतितिस्रिणे इत्यत्र विभक्तिविशेषापेक्षनुमपेक्षया प्रत्ययसामान्यापेक्षस्येयङोन्तरङ्गत्वं दुर्वारमत आह । विशेषापेक्षस्यबहिरङ्गत्वमेवनेतिचेति । एवं च तन्निषेधसामर्थ्यात्परिभाषायामङ्गशब्देन

शब्दरूपमेव निमित्तं गृह्यत इति भावः । तत्रेति । त्रेस्त्रय इत्यत्रेत्यर्थः । ङेरामीति । प्रियत्रयामित्यत्रेत्यर्थः । अन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गस्य तिस्राद्यादेशस्यासिद्धत्वेनान्तरङ्गबहिरङ्गभावानाक्रान्ते विषये एव कपः प्रवृत्त्यान्तरङ्गबहिरङ्गत्वानाक्रान्तविषयश्चालौकिकवाक्ये ऋकारान्तोत्तरपदे एव संभवतीत्याह । लौकिकेत्यारम्भ्याभावादित्यन्तेन । न तिसृति ज्ञापकस्य सामान्यापेक्षस्यासति बाधके इति न्यायेन सिद्धत्वेऽपि लिङ्गमप्याह । प्रत्ययोत्तरेतिसूत्रेचेति । इमौ प्रियतिसृणी प्रियतिसृणीत्येतौ । ननु युवोरित्यत्र पाठेऽपि ङ्याप्सूत्रे भाष्ये लिङ्गविशिष्टपरिभाषाया दोषाः खल्वपि साकल्येन परिगणिता इत्युक्तेस्तत्पाठस्याप्रामाणिकत्वमत आह । ङ्याप्सूत्रेइति । उपसर्जने पुंसीति । पुंस्युपसर्जनं योऽर्थस्तत्र विद्यमानस्येत्यर्थः । ननु प्रसज्यप्रतिषेधेन व्याख्याने तत्संबद्धत्वमेव नेति ह्रस्ववाक्यप्राप्तस्याप्यस्त्रीति निषेधः स्यादेवेत्यत आह । प्रसज्यप्रतिषेधस्त्विति । तत्रेति । पूर्ववाक्ये इत्यर्थः । साचेति । अस्त्रीति पर्युदासादिदं लब्धमिति भावः । व्याख्यानादिति । नेयङुवङोरस्त्रीत्येव सिद्धे स्थानग्रहणसामर्थ्यरूपादित्यर्थः । अङ्गरूपग्रहणादिति । अङ्गे यद्रूपमङ्गरूपमियङादिघटितं तस्य ग्रहणादित्यर्थः । तदाह । यस्याङ्गस्येति । आमीतिच्छेदइति । नत्वमीति फलाभावादिति भावः । अकारसाहचर्येणेति । बहिरङ्गस्य तिस्रादेरसिद्धत्वेन ऋकारस्य कविषये तादृशस्यैव संभवात्तत्साहचर्येणेत्यर्थः । सुष्ठुध्यायतीति विग्रहे सुष्ठुधीर्यस्या इति विग्रहे च सुध्रीशब्दस्य भाष्यमते कैयटमते च श्रीवद्रूपस्यैव सत्त्वान्मतान्तरे च पुंवदिति मूलमसङ्गतमतः पूर्वोक्तम् । यत्तुदीर्घवाक्येइति । मतरीत्या व्याचष्टे । पुंवदित्यारभ्यविकल्प इति बोध्यमित्यन्तेन । ननूत्तरपदेऽस्यनेनाक्षिप्तस्य समासे इत्यस्य शाब्दबोधे ऽन्वयाभावात्समास इत्यर्थालाभो ऽत आह । उत्तरपदेत्यनेनास्येति । अनुमानादिति । एकदेशानुमानादेकाजुत्तरपदे इत्यस्यैकाजुत्तरपदे समासे इत्यर्थं लक्षणेति भावः । प्रियपञ्चानन्द्रौपदीमित्यादौ डाव्विनिषेधायाह । स्त्रियामिति । डाप्ङीपोरनुवृत्त्येदं लब्धमिति भावः । भाष्यस्वरसइति । तत्र हि संनिपातपरिभाषाप्रयोजनावसरे तिस्रस्तिष्ठन्ति चतस्रस्तिष्ठन्तीत्युदाहृतमिति ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

दीर्घापत्तेरिति । कष्टायेति निर्देशात्सुपि चेति दीर्घविषये संनिपातपरिभाषाया अप्रवृत्तेरिति भावः । ननु निर्देशस्य चतुर्थ्येकवचने परिभाषाया अप्रवृत्त्योपप-

त्तेरौत्सर्गिकप्रवृत्तेरिष्टसिद्धिरत आह । संनिपातेति । संबुद्धिलोपानापत्तिरिति । गुणात्संबुद्धेरिति सिद्धे एङ्ह्रस्वग्रहणं तु प्रत्ययनिमित्तकप्रकृत्यादेशे एव संनिपातपरिभाषायाः संबुद्धिलोपे ऽप्रवृत्तिज्ञापकं स्यादिति भावः । इत्यर्थइति । न तु यकारस्येत्यर्थः । व्याख्यानादिति । सूर्यतिष्येति सूत्रे पुनर्यग्रहणरूपादित्यर्थः । व्याख्यानात् । जस्साहचर्यात् । अतएव । श्रुतेर्बलवत्त्वादेव । कर्मणिघञिति । भावे घञि अर्थासङ्गतेरिति भावः । नन्वेवमप्यङ्गस्येत्यस्य निमित्तनिमित्तिभावबोधकषष्ठ्यन्तत्वाड्डतरादिभ्य इत्यस्यार्थपरत्वाद्विरुद्धार्थकत्वेन विरुद्धविभक्तिकत्वादिति भाष्यस्य नासंगतिरत आह । विधानस्यसर्वथानाश्रयणेनेति । परमकतरादित्यादिसिद्ध्यर्थं विहितविशेषणस्य त्वया त्यक्तत्वेन डतराद्यर्थसंबन्धिनोः स्वमोरित्यर्थकरणादिति भावः । निर्जरशब्देउक्तमिति । अजरांसीत्यत्र नुम्जरसोः प्राप्तयोः परत्वाज्जरसिति भाष्ये विभक्त्यादेशा जरसपेक्षया पूर्वविप्रतिषेधेन भवन्तीति तत्रोक्तमिति भावः । अङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षतयाह । यद्वेति । नदोषइति । अत्र पक्षे नसंबन्धिसान्तसंयोगान्ताङ्गस्य सर्वनामस्थाने परे दीर्घ इति सूत्रार्थादन्त्यवर्णान्त्यसदेशवर्णयोरितराव्यवधाने एवानन्त्यविकार इति परिभाषा प्रवर्तत इति न संप्रसारणे इत्यनेन ज्ञापिते ऽर्थे इतरस्य ज्ञापकसाजात्यादन्त्यवर्णनिष्ठत्वहस्त्वझल्त्वान्यतरत्वानाक्रान्तस्यैव ग्रहणाच्चेति भावः । अभिमानइति । सिद्धान्ते तु न लुमतेत्यस्यानित्यत्वादत्र शसादिपरत्वमेवेति भावः । क्लीबवदर्थेइति । सूत्रे नपुंसक इत्यर्शआद्यजन्तमिति भावः । नह्रस्वइति । लक्ष्ये लक्षणस्येति न्यायेन तु न निर्वाहः । नाग्निर्दग्धं दहतीति न्यायेन पूर्वं ह्रस्वाप्रवृत्तेरिति भावः । तस्याःप्राधान्यमिति । शक्तेःप्राधान्यमित्यर्थः । तस्य । क्रियाकारकभावस्य । प्रद्युशब्दे ऽतिप्रसङ्गवारणायाह । समानाद्युपूर्व्येति । निमित्तमादाय पीलुशब्देऽतिप्रसङ्गवारणायाह । समानार्थश्चेति । क्लीबत्वरूपार्थवृत्तेरिति । तादृशार्थकशब्दस्येत्यर्थः । तत्प्रयुक्तेति । नपुंसकत्वप्रयुक्तेत्यर्थः । सर्वकार्याप्रवृत्तेरिति । नेति वक्तव्ये पुंवद्वचनसामर्थ्यादनन्तरस्येति न्यायाप्रवृत्त्या नुम्ह्रस्वयोरुभयोरप्रवृत्तेरिति भावः । ननु हन्तेरन्तोदात्तत्वाभावाद्वधादेशस्यान्तोदात्तोच्चारणमसङ्गतमत आह । अनुदात्तोवेति । लिङ्गसिद्धेति । गावं इति विशेष्यभूतचिह्नसिद्धेत्यर्थः । एचइग्घ्रस्वादेशइति । ह्रस्वादेशविधायके एच इगित्यस्योपस्थित्यैव

इग्घ्रस्वो भवतीति वाक्यार्थो यथा स्यात्। अन्यथानेनापूर्व एचः स्थाने इग्वि-धीयेत एचोयवायाव इत्यादिज्ञापकादस्य परिभाषात्वमेवेति चेत्प्लुतविधायकेष्व-स्योपस्थितिः स्यात्। नन्वेवमपि ह्रस्वे इत्येव सिद्धे आदेशग्रहणं व्यर्थमिति चेन्न। ह्रस्वविधायके एच इगित्यस्योपस्थितिरित्यस्यार्थे ह्रस्वो नपुंसके इत्यत्रैच इगित्य-स्योपस्थित्या एजन्तस्य नपुंसके विद्यमानस्य प्रातिपदिकस्य ह्रस्व इग्भवतीत्येव तस्यार्थः स्यात्तथा च श्रीपमित्यादौ ह्रस्वो न स्याद्यथासंख्यं च स्यात्। आदेश-ग्रहणे तु केन चिद्विधीयमानेषु ह्रस्वेष्वेच इगित्यस्योपस्थितिरित्येतस्यार्थे तत्र तत्र एचइगित्यस्योपस्थितौ वाक्यभेदेनाजन्तस्य प्रातिपदिकस्य नपुंसके वर्तमानस्य ह्रस्वो भवति एजन्तस्य तु इग्घ्रस्वो भवतीति नियम्यते। गोस्त्रियोरित्यत्र तु स्त्रीप्रत्ययान्तप्रातिपदिकस्य ह्रस्वो भवति। गोशब्दस्य त्विग्घ्रस्वो भवतीति च नियम्यते तदेतदाह। एचां पूर्वोभाग इत्यारभ्य न यथासंख्यमित्यन्तेन। नन्वौपश्ले-षिकाधिकरणे एव निर्दिष्टपरिभाषायाः प्रवृत्तेर्वैषयिकाधिकरणे तस्या अप्राप्त्या न बाधोऽत आह। आत्वेकृतइति। विषयएवनेति। नामीत्यारम्भसामर्थ्यात्सा-मान्यत एव नुड्विषये संनिपातपरिभाषा न प्रवर्तत इति ज्ञाप्यत इति भावः। माधवाशयमाहुरिति। अत्रारुचिबीजं तु श्नान्नलोप इति सूत्रे श्नमःशकारोच्चा-रणाभावे नान्नलोप इति न्यासे यज्ञानामित्यत्र दीर्घनलोपयोः प्राप्तौ परत्वान्नलोप इत्युक्तं भाष्ये तदसंगतिरिति सामान्यापेक्षत्वे नलोपापेक्षया सुपि चेति दीर्घस्य परत्वात्तस्मान्नामीत्यनेन दीर्घे कर्तव्ये एव नुड्विषये संनिपातपरिभाषाया अनित्यत्वं नान्यत्रेत्यलम्। समुदितप्रातिपदिकापेक्षेति। पदद्वयात्मकसमुदितप्रातिपदिकापे-क्षेत्यर्थः। वर्णमात्राश्रयेति। ह्रस्ववर्णमात्रं विद्यते यस्मिंस्तद्वर्णमात्रमेकपदाश्रयो यस्येत्यर्थः। यथाश्रुतं तु न युक्तं प्रत्ययग्रहणे यस्मात्प्रत्ययविधिस्तदादीत्यस्यो-पस्थितेः। कृतितुग्ग्रहणाच्चेति। चेनं नयति तत्कुलं नीत्यत्रान्तरङ्गत्वादित्यस्य संग्रहो बोध्यः। वदन्तीति। तत्रारुचिबीजं तु ताभ्यां परिभाषाया अनित्यत्वमेव ज्ञाप्यते। तेन शिर्वोच्य इत्यत्राद्गुणसिद्धिरिति। नन्वेवं संनिपातपरिभाषायां सन्निपातः पूर्वापरसंबन्धो लक्षणं निमित्तं यस्योपजीवकस्य तस्यैवात्राभ्युपगमा-त्मकृते ताद्विरहान्न तुग्वारणं स्यादत आह। किंचेति। तस्याअपीति। संनि-पातपरिभाषाया अपीत्यर्थः। सएवार्थइति। संनिपातः संबन्धमात्रं लक्षणं

यस्योपजीवकस्येति यथाश्रुत एवार्थ इत्यर्थः । ननु संनिपातपरिभाषया तुग्वारणे कृन्मेजन्त इति सूत्रस्थभाष्यविरोधो ऽत आह । ग्रामणिपुत्रइति ॥ इत्यजन्तानपुंसकलिङ्गाः ॥

न्यायस्य । सामर्थ्यरूपयुक्तेः । अन्यत्रापीति । दादेरित्यादावित्यर्थः । वक्तुंयुक्तमिति । यथासंख्यं त्वस्वरितत्वान्नेति भावः । कथमिति । धातुशब्दमुच्चार्य विहितप्रत्ययपरत्वाभावादिति भावः । अत्र । धुंगित्यत्र । घत्वादि । आदिना भष्भावः । एवं चाधोगित्यादावेव तदुभयप्रवृत्तिः स्यादिति भावः । तत्प्रवृत्ताविति । परिभाषाप्रवृत्तावित्यर्थः । नत्वानापत्त्येति । मो नो धातोरित्यत्रापि तथार्थे ऽजङ्गन्नित्यादौ यङ्लुगन्ते तस्य चारितार्थ्येन नत्वानापत्तेरित्यर्थः । ननु यङ्लुकश्छान्दसत्वादत्र पदस्येत्यनुवृत्तस्य सामानाधिकरण्यासंभवाद्वैयधिकरण्येन पदावयवमान्तस्य धातोर्नकारो भवति धातुशब्दमुच्चार्यविहितप्रत्यये परे इत्यर्थात्प्रत्यासत्तित्यागाच्च प्रकृतेः क्विप्परत्वान्नत्वे तत्संगतिः । अन्यथा सूत्रमेव व्यर्थं स्यादितिचेन्न । सूत्रवैयर्थ्येनाप्येतदर्थस्यैव ज्ञापनादित्यलम् । भाष्याविरोधादिति । स्थानेन्तरतम इति सूत्रे इकोयणचीत्युदाहृत्य यथासंख्येनापि सिद्धिरित्युक्तिस्तु ऌकारस्थापनकर्तृसिद्धान्तिनः। पूर्वपक्षिमते तु स्थानेन्तरतम इत्यनेन सिद्धिरिति भावः। ननु द्युभ्यामित्यादौ दिवउदिति तपरकरणसामर्थ्यादेव न दीर्घो ऽत आह । अतएवेति । वचनप्रामाण्यादिति । हल इति सूत्रारम्भसामर्थ्यादित्यर्थः । वचनप्रामाण्यादिति । वचनस्याचः परस्मिन्निति स्थानिवत्त्वातिदेशिकस्य प्रामाण्यात्सत्त्वादित्यर्थः । अनित्यत्वेनेति । पञ्चमीसमासानङ्गीकर्तृमतेनेदम् । तदङ्गीकारे तु दीर्घोत्तरमचः परस्मिन्नित्यनेन सिद्धेः परिभाषाया अनित्यत्वं नोपयुक्तमिति बोध्यम् । ननु यून इत्यादौ पूर्वसवर्णदीर्घे ततो ऽल्लोपो ऽन इत्यकारलोपे पूर्वरूपाभावेपि इष्टसिद्धिरिति चेन्न । विभक्तेरुदात्तनिवृत्तिस्वरापपत्तेः। अल्लोपस्य स्थानिवत्त्वेन यणापत्तेः । सप्तम्येकवचने लोपाभावपक्षे ऽकारस्य श्रवणापत्तेश्च । णिलोपस्य स्थानिवत्त्वेप्यङ्गभसंज्ञकावयवस्य वाहेरित्यर्थात्स्यादेव प्रकृते संप्रसारणमिति केन चिदुक्तं तन्मते ऽप्याह । अङ्गभसंज्ञेति । अत एव तन्मते प्रष्ठवाड्रूप्यायेत्यादौ न संप्रसारणमिति बोध्यम् । विचो ऽसार्वत्रिकत्वादाह । विजूग्रहणमिति । अचः परस्मिन्नित्यत्रकाम्यच्सूत्रेचभाष्येउक्तत्वेनेति । आद्ये स्थानिवद्भावप्रयोजन-

खण्डनावसरे याज्यते इत्यादौ संप्रसारणाभावाय च भाष्ये उक्तत्वेनेत्यर्थः । ननु वचिस्वपीत्यत्र विहितविशेषणपक्षैकवाक्यतया क्रौष्टुपमित्यस्यानाश्रयणेपि वाह ऊठ्सूत्रे तदनाश्रयणे मानाभावेन णिजन्तात्क्विपि विश्ववाट्शब्दस्य संप्रसारणं स्यादेवेत्यत आह । प्रतिपदोक्ततयेति । तदितरेति । काम्यजिति चकारादित्वमाश्रित्योपयट्काम्यतीत्यादौ संप्रसारणरूपतदितरेत्यर्थः । नफलभेदइति । ण्यन्ताद्याजेः क्विपि न फलभेद इत्यर्थः । अप्रवृत्तेश्चेति । चोहेतौ । नुमुपजीवकत्वेन । ततः प्राक् । अमः प्राक् । तस्याप्रवृत्तेर्नुमो ऽप्रवृत्तेर्हेतोर्विरोधाभावादमा नुम् न बाध्यत इत्यर्थः । ननु ङ्याप:सोरिति न्यासे राजेत्यादौ सोस्संयोगान्तलोपे तस्यासिद्धत्वान्नलोपाभावमाशङ्क्य न ङिसंबुद्ध्योरिति संबुद्धिग्रहणेन नलोपे कर्त्तव्ये संयोगान्तलोपस्यासिद्धत्वाभावकल्पनेनैतादृग्लक्ष्याणामनभिधानेन च संयोगान्तलोपस्यासिद्धत्वादिति मूलमसंगतमत आह । हस्थानिकस्येति । न ङिसंबुद्ध्योरिति ज्ञापकेन विभक्तिस्थानिकसंयोगान्तलोपस्यैवासिद्धत्वाभावो ज्ञाप्यते । न तु सामान्यत इति भावः । ध्वनितं चेदमिति । तत्र हि भाष्ये हे अनड्वन्निति प्रत्ययलक्षणस्योदाहरणं दत्तम् । तत्र कैयटः । पूर्वं संबुद्धिलोपमाश्रित्यैतदुक्तं यदि तु विशेषविहितत्वादमुसंबुद्धाविति पूर्वं प्रवर्त्तेत तदा संबुद्धिलोपो न स्यादिति । एवमेव । प्रत्ययानुत्पत्तेरेव । ननु श्नमः परत्वात्तिलोपे ततः श्नमि तत इमिति न भाष्यासंगतिरत आह । अनड्वानिति । उपपद्यते इति । अन्यथा सुलोपात्परत्वादामि विशेषविहितत्वान्नुमि सुलोपाप्राप्त्या भाष्यासंगतिः स्पष्टैवेति भावः । दिगिति । दिगर्थस्तु यः, सः, द्यौः, पन्था इत्यादौ प्रत्ययलक्षणेनाकाराद्यादेशोत्तरं सोरुत्पत्तिर्बोध्या तदा हलन्तत्वाभावेनानुत्पत्तिनिमित्ताभावात् । विषयसप्तम्या तु न निर्वाहः । एतदित्यादौ नपुंसके पूर्वमत्वे लुकं बाधित्वा मादेशे यं सं तमित्यस्यापत्तेरित्यलम् । उच्चारणार्थानां हलामित्संज्ञायां युक्तिमाह । किंचेति । तत्र भाष्यसंमतिमाह । अतएवेति । तित्स्वरितमितिचेति । ननु तद्वार्तिकं प्रत्याख्यातमत आह । दित्त्वमाश्रित्येति । वार्तिकसंमतिमप्याह । किंचेति । ननूच्चारणार्थायामित्संज्ञायामदड्सूत्रस्थं भाष्यं न प्रमाणं हे कतरादित्यत्र संबुद्धिलोपाभावार्थं डित्त्वस्यावश्यकत्वेनाकारस्यापि श्रवणार्थमावश्यकत्वात्तत्रेत्संज्ञकस्यैवाभावादत आह । अतएववेरिति । अतएवेदितइतिच । ननूच्चारणार्थानामित्संज्ञायां भवतितरेत्यादावु-

गितश्चेति ह्रस्वविकल्पस्य पाचिकेत्यादौ उगितश्चेतिङीपश्चापत्तिरत आह । ल्युडादाविति । उकारस्येत्त्वाभावे प्रमाणमाह । अतएवेति । ननु हयवरेत्यादावुच्चारणार्थाकारस्येत्वाङ्गीकारे ऽचूपदार्थबोधात्पूर्वं हल्प्रत्याहारे ऽकारग्रहणापत्तिरत आह । अनुवादइति । ननु प्रातिपदिकत्वेन व्यवसितान्त्यत्वमत आह । फलाभावेनचेति । इकस्तत्त्वादिति । गमेरिडिति । तत्राज्ज्ञनेति सूत्रस्थभाष्यप्रामाण्यान्निरनुबन्धकपरिभाषाया अप्रवृत्तेर्गच्छतेरिट्सिद्धेश्चादोषादिति भावः । नोपधालोपइति । प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वेन प्रकृते ऽभावाङ्गीकारादिति भावः । अतएव । इगन्तस्य प्रातिपदिकत्वादेव । अन्यथा । इगभावे । सानस्यादिति । धातुत्वेनाप्रातिपदिकत्वादिति भावः । इतिकेचिदिति । अत्रारुचिस्तु प्रकृतिवदनुकरणं न भवतीत्यर्थेनाधातुत्वात्सविसर्गपाठोपि साधुरेवेति । ननु विमला द्यौरिति बहुव्रीहौ न सिद्धिरत आह । तितीति । निपात्यतइति । ननु तिति प्रत्ययग्रहणं कर्तव्यमिति वार्तिकस्य द्युभ्यामित्यादौ तदभावः फलमिति तित्स्वरितमिति सूत्रे भाष्ये उक्तं तद्विरुद्धं निपातितान्तोदात्तत्वे सामर्थ्येनैव स्वरितत्वाप्रवृत्तेरिति चेन्न । जातेपि स्वरितत्वे तत्स्थानापन्नस्तद्धर्मं लभते इति न्यायेनोदात्तत्वनिमित्तकोदात्तादनुदात्तस्य स्वरित इत्यनेन विभक्तेः स्वरितस्य प्रवृत्त्योदात्तत्वस्य सार्थक्यात् । तथोक्तमिति । संप्रसारणसंज्ञायां तद्भावितग्रहणं नास्याः संप्रसारणादित्युक्तमिति भावः । ज्ञापनार्थमिति । तत्फलं त्वदसोसेरित्यत्रेति भावः । ज्ञापिते तकारस्य चारितार्थ्यं तु दिवो णिचि ततः क्विप्यूठि द्युभ्यामित्यादौ बोध्यम् । ननु विमलद्यु अहारित्यत्र चरितार्थस्य दिव उदित्यस्य द्युभ्यामित्यादौ स्वादिष्विति पदत्वं बाधित्वा परत्वादूठि सकृद्गतिन्यायेन पदत्वानापत्त्योत्वं न स्यादत आह । द्युभ्यामिति । एतेन । ज्ञापकपरतित्स्वरितमिति सूत्रस्थभाष्येण । ननु तपरत्वसामर्थ्याद्धल इति दीर्घाभाव एव कल्प्यते न तु भाव्यमानोप्युकार इति कुतो नात आह । दीर्घस्येति । बहिरङ्गतयेति । संज्ञात्रयसापेक्षतयोकारविधानकाले उपस्थितत्वेन चेत्यर्थः । अत उदित्यत्र तपरत्वेन कुरुत इत्यादौ त्वनुपस्थितस्यापि गुणस्यागत्या बाध इति भावः । अतएव । बहिरङ्गत्वेन त्रैपादिकत्वेन च दीर्घस्यासिद्धत्वादेव । दीर्घसिद्धिरिति । तन्मते बहिरङ्गपरिभाषाया अपि बाधेन दीर्घो न स्याद्यौरेवं च स्यादिति भावः । परत्वस्येति । निरूपकतासंबन्धेन षट्संज्ञकचतु

शब्दयोः स्थितस्येत्यर्थः । परम्परासंबन्धेनेति । स्ववाचकवृत्तिसंबन्धेनेत्यर्थः । द्वित्वंयुक्तमिति । समानपदाश्रयणत्वापेक्षयान्तर्भूतवर्णमात्रापेक्षद्वित्वस्यान्तरङ्गत्वात् । तथा च पूर्वंद्वित्वे पूर्व नस्य णत्वेपि बहिरङ्गणत्वस्यासिद्धतया परनस्य ष्टुत्वाभावेन नस्य श्रवणं युक्तमिति भावः । णश्रवणापत्तिरिति । चर्त्वस्य जश्त्वापवादत्वं तु न, चर्त्वस्य वैयर्थ्याभावात् । चर्त्वशास्त्रैकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्र पूर्वग्रहणेन जश्त्वशास्त्रस्यापि ग्रहणेन जश्त्वशास्त्रे चर्त्वशास्त्राविषयकरूपसंकोचे मानाभावात् । अत एव ष्णान्ताषडिति निर्देशः संगच्छते । अनचिचेत्यादेर्द्वित्वविषये त्वपवादस्यासिद्धत्वाद्रेफविषयत्वरूपसंकोच इति तदाशयं इति दिक् । नदोषइति । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्य इति द्वित्वस्य नित्यत्वात्पूर्वं कुत्वजश्त्वचर्त्वेषु कृतेषु द्वित्वादिति भावः । त्रियकारकत्वार्थमितीति । अत्र यद्वक्तव्यं तत्पूर्वत्रासिद्धमित्यत्रोक्तम् । अनुवादरूपत्वादिति । अनुवादफलं त्वन्तरङ्गपरिभाषाप्राप्तासिद्धत्वस्यापि बाध इति भावः । नामीत्यत्रोक्तमिति । षट्चतुर्भ्य इत्यस्य गौणेपि प्रवृत्तिरिति हि तत्रोक्तमिति भावः । ननु प्रधानाप्रधानन्यायो यत्रार्थस्य ग्रहणं स्त्रियामित्यादौ न तु यथाकथञ्चिदर्थोपसर्जनकशब्दग्रहणेपि । अत एवास्थिदधीत्यादीनां गौणेपि प्रवृत्तिरुक्ता भाष्ये ऽत आह । यद्वेति । अन्वर्थसंज्ञेति । षडिवाचरति षडित्याचारक्विबन्तप्रकृतिककर्तृक्विबन्ता संज्ञा सा च षडर्थसदृशाचरणकर्तृत्वेनेतरपरिच्छेदकत्वमात्रस्वरूपेणार्थेनानुगतेत्यर्थः । प्रियपञ्चाद्रौपदीति । द्रौपदीवाचको यः प्रियपञ्चाशब्दस्तत्रेत्यर्थः । निषेधोदाहरणं तु प्रियपञ्चानामिति बोध्यम् । नन्वेवं तात्पर्येन्वर्थत्वाभावे न मानमत आह । आकडारसूत्रेभाष्यइति । ननु सर्वनामपर्यायशिष्टशब्दवत्षट्पर्यायो ड्डुशब्दो ऽस्त्वित्यत आह । सर्वनामसञ्ज्ञावदिति । नन्वन्वर्थत्वादेव सिद्धे उपसर्जनप्रतिषेधानारम्भेपि न क्षतिरत आह । सर्वनामसञ्ज्ञासूत्रस्थेनेति । नन्ववसानपरकस्यैव पराणन्तस्यानभिधानमस्तु । एवं हि भोभगो इति सूत्रस्थभाष्यस्यैकदेशयुक्तित्वकल्पनमपि न । एवं चौजसादिपरकयान्तस्याप्युदाहरणं युक्तमित्यभ्युपेत्याप्याह । यान्तास्त्विति । क्विपीति । वस्तुतो लोपोव्योरिति सूत्रभाष्यस्य वकारस्य क्वावुपसंख्यानमिति तत्सूत्रस्थवार्तिकस्य च प्रत्याख्यानारम्भाभ्यां वयलोपयीभ्यो ऽनभिधानमिति भावः । ननु ण्यन्तात्क्विपि विचि णिलोपस्य स्थानिवत्वान्न यलो-

पप्राप्तिरत आह । णिलोपस्येति । अङ्गानपेक्षत्वेनेति । अङ्गसंबन्ध्यनपेक्षत्वनेति मध्यमपदलोपिसमासः । एवं चाङ्गनिमित्तप्रत्ययानपेक्षत्वेनेत्यर्थः । कैयटइति । अत्रारुचिस्तु कादेशविधानसामर्थ्यादेव निर्दिश्यमानपरिभाषाया अकज्विषये ऽप्रवृत्तिरिति सामान्यत एव ज्ञाप्यते । अन्यथेम इत्येव वदेदिति । ननु पूर्वत्रानुवृत्तस्य सोरप्यत्रानुवृत्तिः स्यात्तथा च सौ विभक्तावेवैतस्य प्रवृत्तिः स्यादत आह । स्स्विति । साविदमोदस्येति । नन्वककारस्येदम इदो लोपो हलादौ विभक्तावित्यर्थे इत इत्यादावेशाद्यादेशस्य साकच्के चरितार्थस्य परत्वादेनन बाधे सकृद्गतिन्यायेनेशाद्यादेशो नुवृत्ते न स्यादत आह । आपीति । वर्ततइति । इदानीं विभक्तावित्यस्या न फलमिति भावः । नन्विदमाचष्टे इद् । ततोम्याम्यशादेशे आम्यामिति लोपे इम्यामिति स्यादत आह । अकइति । ननु यस्मात्परो नास्ति सोऽन्त्य इत्यकारस्यान्यत्वे ऽर्थसहितस्यान्यपदार्थत्त्वे चेष्टसिद्धाविदं व्यर्थमत आह । आदिरिति । ननूडिदमित्यादिना विभक्तेरुदात्तत्वे शेषनिघातेनेदमो ऽनुदात्तत्वे सिद्धे ऽनुदात्त इति व्यर्थमत आह । अनुदात्तत्वंत्विति । अन्यार्थतापत्तेरिति । मोराजीतिवदेभिरित्यादौ विकाराभावार्थतापत्तेरित्यर्थः । परत्वादुपधादीर्घो हल्ङ्यादिलोपस्ततो नलोप इति मूलस्य ततोदीर्घानन्तरन्नलोपो हल्ङ्यादिलोपो यः प्राप्तस्सलोपस्सकृद्गतिन्यायान्नेति भ्रमवारणाय नलोप इत्यस्यार्थमाह । नकारेति । नलोप इति षष्ठीसमासो न तु निषेधार्थो नञ् । तत इत्यस्य पुनः प्रसङ्गविज्ञानाद्धल्ङ्यादिलोपानन्तरमित्यर्थ इति भावः । न ङिसंबुद्ध्योः । अधिचर्मेत्यादौ त्विदं न प्रवर्तते प्रत्यासत्त्या ङिनिमित्तकपदत्ववत्प्रातिपदिकान्तं यच्छब्दस्वरूपं तदन्तस्य नस्य ङौ परतो लोपो नेत्यर्थात्तद्ध्वनयन् वक्ष्यति । एतच्छन्धमेवेति । अन्यत्रासंभवः । चर्मतिलादौ च ङावुत्तरपदे इति निषेध इत्येतच्छन्धमेवेत्यर्थः । सर्वविभक्त्यन्तावयवकइति । सर्वविभक्त्यन्तार्थवाचकषष्ठ्यन्तावयवक इत्यर्थः । एकदेशे ऽन्वयासंभवादाह । सामर्थ्यादिति । तुकएवेति । अन्यत्रासंभवादिति भावः । ग्रहणमिति । स्वरसाहचर्यादिति भावः । ननु विधिनियमसंभवे लाघवाद्विधेरेव ज्यायस्त्वेन साहचर्यस्य सर्वत्रानाश्रयणेन च दण्डिष्वित्यादौ नलोपस्यासिद्धत्वं स्यादेवेत्यत आह । वैरूप्यापत्तेरिति । नलोपस्सुबिति सूत्रे पूर्वत्रासिद्धमित्यस्य संबन्धेन स्वरादिषु पूर्वत्रेत्यस्य संबन्धः सुब्विधिविषये ऽसंबन्ध इत्येव वैरूप्यापत्तेरित्यर्थः । सूत्रार्थादिति । सञ्ज्ञायां

दत्तदण्डिनौ दण्डिदत्ताविति भाष्ये उदाहृतत्वेनैतादृशसूत्रार्थादित्यर्थः । एतादृशार्थस्य फलं तु सुद्युवटावित्यादि बोध्यम् । सञ्ज्ञाकृतमिति । अतिस्त्रये इत्यर्थे इयङपेक्षया घेर्ङितीति गुणस्येत्यर्थः । बहिर्भूतसञ्ज्ञानिमित्तकृतश्चेति । क्रोष्ट्रीत्यादौ ङीबपेक्षया तृज्वत्त्वस्य बहिर्भूतसुन्निमित्तकाङ्गसञ्ज्ञाकृतं चेत्यर्थः । इदम् । तुग्ग्रहणम् । तदभावे । तुगभावे । ननु पदस्येत्यस्याप्यत्र संबन्धेन हलि परे रेफवान्तस्य धातोरुपधा य इक्तदन्तस्य पदस्य दीर्घो भवतीत्यर्थे दधिशब्दपूर्वकरैशब्दाद्दिशब्दाच्च णिचि टिलोपे ण्यन्तादचोयति दधीर्यो दधीव्य इत्यादावेव स्यान्न तु प्रतिदीव्नो गीर्यते इत्यादावत आह । पदस्येतीति । अत एव नभेति निषेधो न न पदान्तसूत्रे प्रतिदीव्न इति भाष्योदाहरणं च सङ्गच्छते । हननीयतेरिति । हननप्रकृतिकक्यजन्ताद्धनधातुप्रकृतिकाचारक्विवन्ताद्वेत्यर्थः । ननु नकारे परे कुत्वं विधीयमानमव्यवहितनकारासंभवाद्येन नाव्यवधानन्यायेन हननमित्यादावपि स्यादत आह । नन्वितीत्यारभ्य स्पष्टं भाष्ये इत्यन्तेन । असञ्जातविरोधन्यायेन परिभाषासहकारेण वाक्यार्थे वृत्ते लक्ष्यसंस्कारवेलायामव्यवधानासंभवेन सामर्थ्यात्स्थानिवत्त्वस्याप्रवृत्तिरिति तदाशयः । कुव्यवायेहादेशेष्विति । हादेशेषु सत्सु कवर्गव्यवाये इत्यर्थे प्रत्यासत्त्या हकारस्थानिककवर्गव्यवाये इत्यर्थः । स्रुघ्नइति । स्रुचा हन्यते यत्रेति घञर्थे कविधानमिति कः । अञ्चधातोरिति । नत्वच अचीत्यस्य, नाप्यच्प्रत्याहारस्येत्यर्थः । व्याख्यानादिति । ऋत्विक्सूत्रेऽञ्चेरेव प्रसिद्धत्वान्नपुंसकस्येति पुनरज्ग्रहणाच्चेत्यर्थः । अकारलोपाकरणपूर्वकेति । अकारलोपकरणे ह्यकारलोपकरणवन्नकारलोपस्याप्यविवक्षा स्यादिति भावः । व्याख्यानादिति । झल्ग्रहणापकर्षणादञ्चेः साहचर्याद्वेत्यर्थः । नियतविषयाइति । घृधात्वादिवदिति भावः । ननु मघवा बहुलमित्यत्राङ्गाधिकारान्मघवतीत्यत्र पुंयोगेन स्त्रियां वृत्तौ नान्तलक्षणे ङीपि ततस्त्रादेशेन नान्तत्वरूपनिमित्तस्य विनाशादकृतव्यूहा इति परिभाषया नान्तलक्षणो ङीबेव न स्यादत आह । उगितश्चेतीति । एवं पूर्वं सुपि पञ्चभिः क्रोष्ट्रीभिरिति तृज्वत्सूत्रस्थभाष्यप्रयोगादङ्गसञ्ज्ञामात्राश्रयविधौ संनिपातपरिभाषाया अप्रवृत्तेस्त्रादेशोत्तरमुगितश्चेति ङीबिति भावः । इदं प्राचामनुरोधेन । वस्तुतोऽकृतव्यूहपरिभाषाया भाष्यानुक्तत्वादभावेन नान्तलक्षणे ङीपि वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तमिति संनिपातपरि-

भाषाया भाष्ये ऽनित्यत्वेषु परिगणनाच्चादेश इति तत्त्वम् । न केवलः स्वरकृतो विशेषः किं त्वन्यकृतोपीति तदेवाह । किञ्चेति । यण्प्रसङ्गइति । मघोन इत्यत्र त्रादेशस्याप्युपलक्षणमिदम् । इत्यादिनिर्देशैरिति । आदिना यूनस्तिः श्वयुवमघोनामित्यनयोर्ग्रहणम् । इङ्गितेन अभिप्रायसूचकशरीरभवव्यापारेण रोमाञ्चेन निमिषितेन अक्षिव्यापारेण चेष्टितेन कायपरिस्पन्देन । प्रथमैकवचनमिति । एतदपि वाजमर्वस्त्विति प्रयोगादेव ज्ञाप्यत इति भावः । व्यावर्त्यइत्यर्थइति । एवं च प्रत्युदाहरणं त्वनर्वाणविसादिबोध्यम् । एतेनानर्वेति इव्यङ्विकलमित्यपास्तम् । ननु प्रश्लेषस्य सर्वाकारविधानेन चारितार्थ्यान्न तेनानुकरणं भविष्यतीयत आह । भाष्येत्विति । अष्टन आ इति सूत्रस्थे भाष्ये त्वित्यर्थः । केचित्त्विति । कैयटादय इत्यर्थः । इदंसर्वमिति । अकारप्रश्लेषनिरनुनासिकाकारोच्चारणसामर्थ्याभ्यां वारणमित्यर्थः । तत्प्राप्तस्यापीति । जात्यभेदकत्वप्राप्तस्यापीत्यर्थः । अपिना त्यदादीनामित्यादावणुदित्सूत्रप्राप्तस्य संग्रहः । अतएव । अप्रत्ययग्रहणेन-जात्यभेदकत्वयोर्निषेधादेव । प्राप्नोतीति । तपरसूत्रस्य नाप्रत्यय इत्यनेन निषेधस्तपरसूत्रस्य परत्वात्तेनैव निषेधस्य बाधसंभवात् । गुणाभेदका इत्यस्य तु अनुदित्येव सिद्धे ऽण्ग्रहणादेकदेशानुवादादिति भावः । नन्वणुदित्सूत्रसंबद्धमप्रत्ययग्रहणं कथं सर्वनिषेधकमत आह । अप्रत्ययइतिच वाक्यभेदेनेति । सर्वेति । अणुदित्सूत्रजात्यभेदकत्वप्राप्तसर्वेत्यर्थः । तत्र । निषेधे । अतएव । निषेधे ण्ग्रहणसंबन्धादेव । तेन । अण्ग्रहणासंबन्धेन । तस्याः । परिभाषायाः । व्यापकत्वम् । सर्वनिषेधकत्वरूपम् । मदुक्तरीत्याव्याख्यानं चेति । प्रतीयते विधीयते इति व्याख्यानं चेत्यर्थः । सिद्धान्तमाह । वस्तुतइति । ततः । इतोपिअस्मात् । लाघवाभावादिति । फलाभावेन तपरसूत्राप्रवृत्त्योकारादिमात्रस्य शक्त्यभावात्प्रक्रियाकृतस्य नपुंसके लुममोः प्रवृत्त्या प्रमाणकृतस्य च लाघवस्याभावादित्यर्थः । अन्यथा । अन्यतरकृते तपरकरणाभावे लाघवे । कुरुतइत्यादावविति । अत उत्सार्वधातुके इत्यत्रोदिति तपरत्वाभावे नपुंसकत्वात्सोर्लुकार्धमात्रालाघवेनोच्चारणे कर्त्तव्ये तपरत्वसामर्थ्याद् गुणाभावस्तत्रेति भावः । उपधाग्रहणमिति । नन्वनन्त्यविकारे ऽन्त्यसदेशस्येति परिभाषया यकाराकारस्य दीर्घो न भविष्यतीत्युपधाग्रहणं व्यर्थमिति चेन्न । तदनित्यत्वस्याप्यनेन ज्ञापनात् । तेन तदोः सः

त्तौ, धात्वादेः षः सः, णो न इत्यादौ न तत्परिभाषायाः प्रवृत्तिरिति भावः । संनिपातपरिभाषाविरोधइति । पञ्चानामिति लिङ्गात्संनिपातलक्षणो विधिस्ताद्विघातस्य साक्षादेवानिमित्तं न परम्परया ऽनिमित्तमित्यर्थः । नन्वेवं कृन्मेजन्त इति सूत्रस्थकुम्भकारेभ्य इत्यादौ संनिपातपरिभाषायाः प्रवृत्तिपरभाष्यस्य विरोध इति चेन्न । भाष्यप्रामाण्येन संनिपातलक्षणविधेः संनिपातजन्यस्यं संनिपातजन्यजन्यस्य वा ग्रहणेपि संनिपातजन्यजन्यजन्यग्रहणे मानाभावादिति भावः । नानुनासिकइति । अणुदित्सूत्रेणेति भावः । अन्यत्रापीति । पथिमथीत्यत्रापीत्यर्थः । असिद्ध्यापत्तेरिति । ननु प्रक्रियालाघवाय उशिलेव वक्तव्ये उङ्विधानसामर्थ्यादन्तरङ्गपरिभाषाया अप्रवृत्तौ नित्यत्वात्पूर्वं गुणे ततो वृद्धौ रूपसिद्धिरिति चेन्न । एवमपि शासि आतो धातोरित्यत्रात इति योगविभागेनाकारलोपे ऽष्टावित्याद्यसिद्ध्यापत्तेः । लाघवादिति । मात्रिकाकारोच्चारणेन प्रकृतिवदनुकरणं भवतीत्यतिदेशानाश्रयणेन चेति भावः । पर्यायशब्देषु लाघवगौरवचर्चा नाद्रियत इति वैकल्पिकेष्वपि भावानुष्ठानस्यौचित्यं क्लेशाधिक्याद्धर्माधिक्यायेति चार्थबोधनाय यत्र प्रयोगः प्रक्रियाभावश्च तद्विषयकमिति तत्त्वम् । ननु पूर्वत्रेत्यस्य वाचिकादिसिध्यर्थं विषयसप्तमीत्वावश्यकत्वेनेदमसंगतमत आह । संनिपातस्येति । ननु संनिपातपरिभाषाया ङिति ह्रस्वश्च वामीति सूत्रद्वयकरणेन ज्ञापितत्वान्नुडेकवाक्यतापन्नत्वाच्च सपादसप्ताध्यायीस्थत्वात्परिभाषादृष्टचैव नलोपस्यासिद्धत्वमत आह । आरोपितासिद्धत्वेपीति । परिभाषायाअनित्यत्वेनेति । पञ्चानामिति निर्देशान्नुड्विषये परिभाषाया अनित्यत्वेनेत्यर्थः । तदनित्यत्वेन । शमामष्टानामिति निर्देशात्तदनित्यत्वेन । नन्वात्वे तदनित्यत्वस्य भाष्योक्ता ऽनित्यत्वपरिगणने ऽभावादात्वं तदनित्यत्वे न युक्तं किं तु नोपधाया इति दीर्घे नलोप एव युक्तः । नलोपे तु सा प्रवर्तते षट्त्वस्य संनिपातजन्यत्वे नुटः संनिपातजन्यजन्यत्वेपि न तयोः साक्षात्संनिपातनाशकनलोपे निमित्तत्वम् । पदत्वस्य नलोपे साक्षान्निमित्तत्वेपि तस्य संनिपातजन्यत्वं सन्निपातजन्यजन्यानन्तर्भावादत आह । किञ्चेति । नलोपोवेति । इवार्थे वाशब्दो नलोप इवेत्यर्थः । स्थानिवद्भावेनेति । स्थानिसंदशो लौकिकेनैकदेशविकृतन्यायेन तत्स्थानापन्न इति न्यायेन वा भावस्तेनेत्यर्थः । स्थानिवत्सूत्रस्य त्वशास्त्रीयकार्यत्वान्न प्राप्तिरिति भावः । नन्वकारान्तस्य षट्त्वे

हलीत्यस्यापकर्ष एव मास्तु कृते आत्वे ऽन्तरङ्गत्वाज्जातस्य षट्त्वस्य स्थानिवद्भावेनाकारान्ते आश्रयणेन नुटि सिद्धेरत आह । कार्यकालपक्षे इति । बहिरङ्गतयेति । प्रतिपदोक्तत्वापेक्षयेत्यर्थः । आत्वेकृतइति । शीघ्रोपस्थिकत्वेन प्रतिपदोक्तत्वरूपान्तरङ्गत्वेनेत्यादिः । अकारान्तस्यषट्सञ्ज्ञाश्रयणेइति । भौतपूर्विकनान्तसंख्यावाचकत्वमादायेत्यर्थः । पूर्वंषट्त्वेइति । भविष्यति किं चिदनेन प्रयोजनमिश्रिभिसंधिमात्रेणेत्यर्थः । समाहितमिति । भाष्ये इति शेषः । व्याख्यानान्तरमुक्तमिति । कैयट इति शेषः । क्विनिक्विपिचेति । चो भिन्नक्रमः सोपपदे क्विनि क्विपि विशेषाभावे चेत्यर्थः । लाघवान्निरुपपदे एव क्विन्विधीयत इति भावः । गुणप्रतिषेधाद्यर्थइति । आदिना यजेः प्रसंसारणस्य प्राचा इत्यादौ नलोपस्य च संग्रहः । सञ्ज्ञाभावाइति । तेन कर्तृकरणे इति णिजन्तादिभिः समासो न यगादिष्वकृत्सार्वेति दीर्घसिद्धिश्च भवतीति भावः । ननु रुरुदिवेत्यत्र क्रादिनियमेन न दोषो ऽत आह । आदाविति । आदिना रुरुदिव इत्यादेः संग्रहः । चस्यकुत्वापत्तिरिति । निर्दिश्यमानपरिभाषया क्विवादिषु सावकाशं वेरपृक्तस्येति लोपं विशेषविहितत्वाद्बाधित्वेत्यर्थः । यइत्येवेति । एवं च कुग्रहणसामर्थ्यान्निर्दिश्यमानपरिभाषाया अप्रवृत्त्या क्विन इत्यस्यासिद्धत्वेन च न कुत्वेन वलोपबाध इति भावः । व्याख्यानात् । प्रतिपदोक्तत्वरूपात् । कुत्वंनेति । तादृशभाष्यप्रयोगादव्ययपूर्वपदभिन्नस्य कुत्वं नेत्यर्थः । मते इति । मतान्तरे तु परौ व्रजेः क्विप्दीर्घौ षस्तु पदान्त इति पाठ्यमिति बोध्यम् । व्याख्यानादिति । श्रुतानुमितयोरिति परिभाषणादसान्निध्याद्वेत्यर्थः । षेणैवेति । श्रुतत्वात्सान्निध्याद्वेत्यर्थः । झलःपरयोरिति । झलः परयोर्झलि पदान्ते च संयोगाद्योः स्कोरित्यर्थः । अत्रार्थे सूत्रोदाहरणं तु क्रमिस्त्रिभ्योः क्विबन्तयो स्तच्छब्दोपपदयोः समासे ततो णिचि टिलोपे क्विपि णिलोपे सुपि तत्क्रुतस्त्रु इत्यत्र पदान्ते संयोगस्य सत्त्वात्तत्क्रुतस्त्रुशब्दादाचारक्विबन्तात् क्तिचि तत्क्रुतिः तत्स्त्रुतिरित्यत्र झल्परसंयोगस्य सत्त्वात्स्कोरिति लोपे तत्रुतिस्तत्रुतिरिति चेति । यदितु यणः प्रतिषेध इति पक्षैकवाक्यतया ऽत्र पक्षे एतादृशानामनभिधानमेव ने त्युच्यते तर्हि तदुपपदाभ्यां क्षमिस्कमिभ्यां क्विबादिषु पूर्वोक्तप्रकरणसिद्धन्तत्क्ष् ततक् इति ततःक्तिरिति चेति बोध्यम् । पदान्ते संयोगान्तलोपस्त्वेतदारम्भान्नेति भावः । नार्थइति । तथा सति भृडित्यादौ

भ्रष्टेत्यादौ च लोपो न स्यात् तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि तग् रगित्यादिसिध्यर्थं तस्य दोष इति स्थानिवत्त्वारम्भे पूर्वोक्तोदाहणयोः स्थानिवत्त्वादेतदप्राप्त्या संयोगान्तलोप एव पदान्ते झलि परतस्त्वजव्यवहितस्य हलसमुदायस्य शास्त्रबोधितस्यासाधुत्वबोधनात्सुट् तिथोरित्यत्रेकारोच्चारणेनेत्यप्रयोग एवेति बोध्यम् । ननु भूयास्तामित्यादौ प्रत्ययस्य सङोभावादेकस्य सस्य लोपानापत्तिरिति चेदिष्टापत्तिरित्याह । भूयास्तामित्यादाविति । व्यञ्जनपरस्येतिन्यायेनेति । व्यञ्जनं परं यस्य तस्य व्यञ्जनात्परस्य नाव्यञ्जनस्य सजातीयस्यैकस्यानेकस्य वोच्चारणे विशेषाभाव इति न्यायेनेत्यर्थः । ननु झलादौ प्रत्यये इत्यस्य सङीति वार्तिकस्य च प्रत्याख्याने घनाघनः क्षोभण इत्यादौ लोपापत्तिरत आह । प्रत्याख्यानमिति । विधानसामर्थ्यादिति । क्विन्विधानसामर्थ्यादित्यर्थः । नस्याप्यापत्तेरिति । तस्य निर्दिश्यमानावयवत्वादित्यर्थः । ननु तस्मान्नुडचीत्यत्र तस्य नुगचीत्येवास्तु तस्य लुप्तनकारस्य नञो नुगजादौ उत्तरपदे इत्यर्थः । न च नलोपापत्तिर्नुको बहिरङ्गतयासिद्धत्वाद्विधानसामर्थ्याच्चेत्यर्थः । एवं चात्र तोरिति न्यासे अनेष इत्यादौ न दोष इति चेन्न । अनेष इत्यादौ ङमुडापत्तेः । न च संनिपातपरिभाषया ङमुडभावः । यदागमपरिभाषया शास्त्रीयस्याप्यतिदेशादजाद्युत्तरपदानन्तर्यरूपसंनिपातस्य सत्त्वात् । अत एव साम आकमिति ससुट्कनिर्देशः सङ्गच्छते । न ओ ऽनस्तमाचष्टे इति णिजन्तात्क्विपि णिटिलोपे अन् मित्रं यस्य अन्मित्र इत्यादौ नञो जरमरेति स्वरापत्तेश्चेति दिक् । भाष्येऽध्वनितमिति । तत्र हि तदोरिति सूत्रे तवर्गनिर्देशो एतत्प्रयोजनमिह माभूदनेषकः करोतीत्युक्तम् । नन्वकारस्य विवक्षितत्वे ऽतो गुण इत्येकस्यैव शास्त्रस्य प्रवृत्तिः । अविवक्षितत्वे इत्सञ्ज्ञालोपविधायकशास्त्रद्वयस्येत्युच्चारणार्थत्वे एव गौरवमत आह । इत्सञ्ज्ञालोपयोरिति । न प्रयोगस्य साधकत्वेगौरवमिति । अनन्तप्रयोगेषु परस्परप्रवृत्तिकल्पनोपेक्षया सूत्रे शास्त्रद्वयप्रवृत्तौ न गौरवमित्यर्थः । किं तु ततो लाघवमेवेति भावः । ननु णिजन्तात् क्विपि युष्म् अस्म् इति प्रातिपदिकयोस्त्वादेशे ऽकारोच्चारणस्य क्वचिद्विभक्त्युदात्तार्थं क्वचिच्छ्रवणार्थत्वं चेति कथमुच्चारणार्थत्वमत आह । णिजन्तात्क्विपीति । व्याख्यानात् । भाष्यप्रामाण्यरूपात्तदाह । भाष्यप्रामाण्याच्चेति । चो हेतौ । युष्मदस्मदोरेव विशेषणमिति । श्रुतानुमितयोरिति परिभाषयेति भावः । अन्तरङ्ग-

त्वादिति। अकृच्यपि सुबन्तस्य प्रकृतविषये उद्देश्यत्वेन स्वार्थे परिपूर्णमिति न्यायेन युवाद्यादेशात्पूर्वं कुत्सादिविवक्षाया अभावेन चादेशानामन्तरङ्गत्वादित्यर्थः। ननूक्तरीत्या ऽकचो बहिरङ्गत्वेनात्राप्यादेशोत्तरमेव प्रवृत्त्या न दोष इत्याशयेनाह। हलन्ताएवादेशाइतिपक्षेत्विति। भाष्योक्तेरिति। आदिरन्त्येनेत्यत्रेत्यर्थः। अतएव। यदागमपरिभाषया संनिपाताविघाताभावादेव। अतएव। मकारान्तरप्रश्लेषाभावादेवं अतएव। संनिपातपरिभाषया पुंसि श्यप्राप्तेरेव। तस्या अङ्गसंबन्धिकार्यविषयत्वादिति। तस्याः परिभाषायाः पुनःप्रसङ्गसंबन्धिकार्यविषयत्वादित्यर्थः। अतएव ज्यादादीयस इति सूत्रस्थज्ञापकपरभाष्यप्रामाण्येन न विरोधस्तदाह। सूत्रभाष्यस्वरसोपीति। ज्ञापकसाजात्यात्तादृशविषय एव तत्र तत्र भाष्ये संचाराच्चेत्यर्थः। त्वमावेकवचने। प्रत्ययोत्तरपदयोस्त्वमावेकवचने इत्येकेन सूत्रेणैव सिद्धे योगविभागो व्यर्थ इति न वाच्यम्। एकसूत्रत्वे उत्तरपदसाहचर्येण प्रत्ययस्यापि वृत्तिघटकस्यैव ग्रहणापत्त्या विभक्तावादेशानापत्तेः। व्याख्यानादिति। भाष्ये ऽमादेशनिषेधकमिदं कुतो नेति शङ्काकरणरूपादित्यर्थः। अत्रयद्वक्तव्यंतदुक्तमिति। अभ्यमित्येवेत्यारभ्य संगच्छते इत्यन्तेनेति भावः। सामःस्थानित्वोक्तचेति। आमि साम्त्वारोपेणेत्यर्थः। सामुत्वमेवेति। सकारोच्चारणसामर्थ्यादित्यर्थः। अत एव। गौणमुख्यासाधारण्येनामि साम्त्वारोपेणसामःस्थानित्वेनोक्तत्वादेव। ननु सुटः प्राधान्ये एव प्रवृत्त्या गौणे आरोपे न मानमत आह। प्रत्ययोत्तरपदयोरितीति। आम्त्वाभावाच्चेति। सकारोच्चारणसामर्थ्येन स्थानिवद्भावेनापि आम्त्वाभावादित्यर्थः। तत्रैवायमिति। तत्र वाम साम्त्वारोपेणाकमित्यर्थः। सामइति। सामितिशब्दरूपस्येत्यर्थः। सर्वथादुरुपपादत्वादिति। भाविसाम्त्वस्य शास्त्रीयकार्यत्वाभावेन स्थानिवत्स्वरूपातिदेशालभ्यत्वात्सर्वप्रकारेण दुरुपपादत्वादित्यर्थः। ननु सामर्थ्येन शास्त्रीयस्याप्यतिदेशेन भाविसाम्त्वस्य संभवो ऽत आह। भाष्यविरुद्धकल्पनेति। प्रत्ययोत्तरपदयोरितिसूत्रस्थभाष्यविरुद्धकल्पनेत्यर्थः। ननु होढ इत्यत्र वाक्यभेदायान्ते पदानुवृत्तेरवयवषष्ठ्येवेत्यत आह। आदाविति। आदिना मो नो धातोरित्यादेः संग्रहः। अन्यथेति। स्थानषष्ठ्यङ्गीकारेत्यर्थः। नस्यादिति। मत्वन्तपदस्य स्थाने मवर्णावर्णान्तान्मवर्णावर्णोपधाच्च परस्य निर्दिश्यमानस्य वो भवतीत्यर्थे वृक्षवन्तावित्यादौ न स्यात्। वृक्षवानित्यादावेव स्यादिति भावः।

अतएव । पदस्येत्यस्य क्वचिद्वैयधिकरण्यस्वीकारादेव । भाष्येइति । एतेनान्तग्रहणसामर्थ्यान्मुख्यप्रातिपदिकान्ते एव नलोपप्रवृत्तिर्न तु व्यपदेशिवद्भावलभ्यान्ते । अत एव नॄः संख्याया इति निर्देशसंगतिरित्यपास्तम् । ननु सर्वग्रहणं किमर्थमित्याङ्काक्षायामाह । सर्वग्रहणंत्विति । नन्वपदादाविति पर्युदासेन पदादिभिन्नस्य पदघटकस्यैव ग्रहणं स्यान्न तु वाक्यस्यापीत्यत आह । अपदादिशब्देनेति । छन्दोहीनेति । जगत्यादिच्छन्दोहीनेत्यर्थः । ननु संधौ सत्यक्तपरिमाणे एकदेशविकृतन्यायाभावान्न तेन न्यायेनास्मच्छब्दत्वमत आह । आदेशेसतीति । अन्ये इति । भाष्यतत्त्वविद इत्यर्थः । परेइति । केचिदित्यर्थः । अत्रारुचिवीजं तु व्यपवर्गाभावान्नोभयत आश्रयणप्रवृत्तिरिति । इत्यर्थकमिति । इति प्रयोजनकमित्यर्थः । इत्येतन्मात्रस्यनवाक्यत्वमिति । एवं च देवदत्तः पचतीत्यस्य कर्मधारयत्वे वाक्यत्वे न स्यादेकग्रहणवैयर्थ्यं च स्यादिति भावः । तत्प्रवृत्तेरिति । युष्मदस्मदोः षष्ठीति सूत्रे स्थग्रहणादत्र पदाधिकारानेकार्थीभावकल्पनेति भावः । स्वार्थइति । चार्यसमुच्चयाश्रयहरिहरान्वयिस्वामित्वान्वयित्वादीत्यर्थः । नन्वनालोचन इति पर्युदासेन वहिरिन्द्रियजन्यज्ञानार्थकधातुयोगे एवेदं सूत्रं प्रवर्तत इति चेत्तस्येत्ययुक्तमित्यत आह । अनालोचनार्थैरित्येवेति । अत एव । युक्तग्रहणाभावेपि साक्षात्संबन्ध एव प्रवर्तमानादेव । ननु प्रातिपदिकार्थेति सूत्रेण प्रथमायां कर्त्तव्यायां प्रातिपदिकोक्तत्वस्य व्यावर्त्तकत्वेपि संबोधनेचेत्येतत्प्रवृत्तौ व्यावर्तकत्वं स्यादेवेत्यत आह । तिङिति । ननु भो इत्यस्य विभाषाभवदिति सिद्धभो इत्यनेनार्थतः प्रतिरूपकत्वान्निपाताङ्गीकारस्य भाष्ये कृतत्वान्न संबोधनद्योतकत्वं किं तु वाचकत्वमत आह । देवदत्तस्यैवेति । नन्वनन्तरस्येति न्यायेनाष्टमिकसूत्रेण विहितकार्ये एवाविद्यमानवत्त्वप्रवृत्त्या षष्ठ्याद्युदात्तो भविष्यत्येव पूर्वग्रहणाभावेपीति शङ्कते । पूर्वंकिमिति । आमन्त्रितस्वरइति । आमन्त्रितनिघात इत्यर्थः । नामन्त्रिते समानाधिकरणे सामान्यवचनम् । समानाधिकरणेकिम् । देवदत्त भोः । नन्वत्रभो इत्यस्य विशेषणत्वाद्देवदत्तेत्यस्य विशेष्यत्वात्सामानाधिकरण्यमस्त्येवेति चेन्न । समानाधिकरणग्रहणसामर्थ्यादसमानार्थकत्वरूपसामानाधिकरण्यस्य विवक्षितत्वात् । अत्र तु भो इत्यस्य लिङ्गवाचकत्वाभावाद्देवदत्तेत्यस्य पुंस्त्ववाचकत्वादन्त्यन्तसामानाधिकरण्याभावान्निषेधाप्राप्त्या देवदत्तेत्यस्याविद्यमानत्वं भव-

त्येव । देवकरोषीति । करोषीत्यस्य ण्वुलर्थोपदर्शकत्वेन लिङ्गादिविशिष्टविशेषणार्थकत्वादिति वदन्ति । अनन्त्यविकारेति परिभाषयेति भावः । अञ्चतेरिति । न त्वच्प्रत्याहारस्य नाच गतावित्यस्य नाच्प्रत्ययस्येत्यर्थः । व्याख्यानादिति । द्युप्रागपागुदक्प्रतीचो यदिति निर्देशादित्यर्थः । नेदंवर्गग्रहणंव्याख्यानादिति । चजोरिति निर्देशादिति भावः । अनभिधानमिति । हल इति सूत्रस्थभाष्यप्रामाण्यादित्यर्थः । तदेतत्कैयटेन स्पष्टीकृतं तदाह । एवं चेत्यारभ्याकरे स्पष्टमित्यन्तेन । सएव । क्विवादिरेव । अन्यथा । यथाश्रुतार्थाङ्गीकारे । नन्वपूर्वपरिभाषास्वीकारे गौरवमत आह । किंचेति । ननु भत्वेनानवकाशत्वादेव पदत्वस्य बाधोस्त्वित्यत आह । राज्ञइत्यादाविति । बाधायोगादिति । नलोपैकवाक्यतापन्नभसंज्ञासूत्रदृष्ट्या ऽसिद्धत्वेनेति भावः । ननु कार्यकालपक्षेपि परिभाषाशास्त्रवत्संज्ञाशास्त्रस्यापि स्वदेशत्यागायोगस्य युक्तिसिद्धत्वम् । अदसोमादिति सूत्रस्थमायादिभ्यः परैव प्रगृह्यसंज्ञेति भाष्यस्य त्वयमर्थः । परैव प्रगृह्यसंज्ञा उत्कृष्टैव प्रगृह्यसंज्ञेति । अन्यथा प्रगृह्यसंज्ञाया अन्तरङ्गत्वादप्रगृह्यादस इत्येव सिद्धे संज्ञाविधानसामर्थ्येनापवादत्वात्तत्प्रयुक्तकार्यस्यापवादत्वाच्चायादीनां बहिरङ्गत्वात्सावकाशत्वाच्च विप्रतिषेधाप्राप्त्या तदसंगतिः स्पष्टैव । एवं च कार्यकालपक्षेपि यजादिस्वादिपरो योनित्यर्थस्य लाभेन परिभाषानारम्भेण च लाघवमत आह । यजादिप्रत्ययस्येति । वेत्यनेन कार्यकालपक्षेपि संज्ञाशास्त्रस्य वाक्यैकवाक्यतया विधिनान्वयाद्यचीत्यादेरावृत्त्यैव तद्विधावन्वयेन गौरवादमुमुयङ्ङित्यादि सिध्यर्थं परिभाषाया आवश्यकत्वाच्चेत्यपि बोध्यम् । अतएव । परिभाषानारम्भे गौरवादारम्भस्यावश्यकत्वाच्चैव । सर्वफलानामिति । अदमुयङ्ङित्यादिव्यतिरिक्तसर्वफलानामित्यर्थः । तस्मात् । अदमुयङ्ङित्यादेरसिद्धत्वेनचारम्भगौरवाच्च । यानीति । अन्यथासिद्धानि प्यङ इत्यत्रोक्तानि । अन्यथासिद्धानि । अदमुयङ्ङित्यादीनि चेत्यर्थः । अतएव । अन्त्यसदेशस्यान्येन व्यवधानादेव । तत्र मानमाह । सूत्रसार्थक्यमिति । ननु परिभाषास्वीकारेण न संप्रसारणे इति सूत्रस्थभाष्यविरोधोत आह । नैतस्याइति । अत्वविषयेइति । अकारस्याकारस्य च विषय इत्यर्थः । अतएव । अदमुयङ्ङित्यस्य न्याययुक्तत्वादेव । तत्रासम्मतिरिति । अदद्र्यङ्शब्दे ऽसंमतिरित्यर्थः । इत्युक्त्या चतत्र शब्देऽप्रयुक्तत्वमिति । चो भिन्नक्रमः । इत्युक्त्या तत्र शब्दे ऽदद्र्यङ्

अमुमुयङ्शब्दे ऽप्रयुक्तत्वं च सूचितमित्यर्थः। परिभाषाज्ञानकृतगौरवापत्तेरिति। साकचः सामः आदेशार्थं साम्ग्रहणं तु न समो द्योतकत्वेन कुत्साविशिष्टवाचकत्वाभावेनाकच एवाप्राप्तेरिति भावः। अस्यालोपइति। अस्य लोपो ऽलोपो नालोपो यस्मिन्निति न विग्रहो नुडापत्तेरिति भावः। अलुप्ताकारेतीति। तेन नलोपेप्यदोष इति भावः। तन्निषेधादिति। नपदान्तेति पूर्वत्रासिद्धेनेति वा तन्निषेधादित्यर्थः। यद्यपि वेतस्वानित्यत्र न पदान्तेति निषेधवारणाय पदे ऽन्त इति समासाश्रयणपरभाष्यप्रामाण्येन पूर्वत्रेत्यत्र पूर्वत्रासिद्धशब्देन पदचरमावयवविधायकातिरिक्तस्यैव ग्रहणं प्रतीयते तथापि शम्शब्दाद्घञन्ताण्णिचि क्विप्यनुनासिकस्येति दीर्घे शानित्यत्र मो नो धातोरिति नादेशसिद्ध्ये वार्तिके लोपनिमित्ततद्धितपरकपदचरमावयवविधायकातिरिक्तस्यैव पूर्वत्रासिद्धस्य ग्रहणेनात्र वार्तिकस्याप्रवृत्तिरिति भावः। स्पष्टमिति। एतेनाञ्चु गतौ अचि पूजायामित्येव सिद्धे नाञ्चेः पूजायामञ्चेः पूजायामिति सूत्रद्वयं व्यर्थमित्यपास्तम्। ननु प्राच इत्यादौ पूजासत्त्वान्न लोपो न स्यादित्यत आह। प्राचइत्यादीति। रूढस्येति। एवं च पूजायां गम्यमानत्वाभावान्नलोपसिद्धिरिति भावः। एतेनेति। प्राच इत्यादौ नलोपसंपादनेनेति भावः। ओपधत्वेति। तत्फलं तु क्रुञ्च्यादित्यादौ ञश्रवणं नलोपाभावस्तु क्विन्संनियोगेनैव स्यादिति भावः। भाष्येइति। तत्र हि क्रुञ्चेत्यत्र चोः कुरिति कुत्वमाशङ्क्य ऋत्विगादिसूत्रे क्रुञ्चामिति निपातनान्नेति समाहितम्। तेन ञोपधत्वं स्पष्टमिति भावः। ननु ञोपधत्वस्वीकारे कुत्वस्य नकारजावित्यभियुक्तवचनस्य चाभावकल्पने गौरवान्न लोपाभावनिपातने तु तन्मात्रस्याभावकल्पने लाघवमत आह। सङ्गीतिवचनादिति। पयःस्थितिरित्यादौ झलो झलीत्यादेर्निवृत्त्यर्थं तत्र वार्तिकादत्रानुवर्तमानादित्यर्थः। एवं च तत्रैव साक्षाच्छास्त्रबाधकल्पने गौरवं क्रुञ्चादित्यादिलक्ष्यासिद्धेश्चेति भावः। अल्लोपकरणपूर्वकमिति। अल्लोपकरणे ह्यल्लोपवन्नलोपस्याप्यविवक्षा स्यादिति भावः। नस्थानिवदिति। दीर्घविधौ न स्थानिवदित्यर्थः। क्विलुप्तत्वादिति। न पदान्तेति सूत्रस्थदीर्घग्रहणप्रत्याख्यानवादिनये इदम्। सिद्धान्तिनये तु दीर्घविधित्वादित्यपि बोध्यम्। ननु झेर्जुसित्यत्र झसहितस्य एर्जुसित्यर्थे ऽन्तादेशोत्तरं न जुसप्राप्तिरत आह। किंचेति। एकादेशे। सनकारस्य शसकारेणैकादेशे। एकादेशइति।

पूर्वोक्तैकादेशो इत्यर्थः। पूर्वसमुदायेप्रवृत्तसंज्ञयाइति। अस्य भविष्यति किं चिदनेन प्रयोजनमित्यभिसंधिमात्रेणेत्यादिः । स्थानिवद्भावेनेति । एकदेशविकृतन्यायेन स्थानिसदृशभावेनेत्यर्थः। ननु यथोद्देशपक्षेऽपि कार्यैकवाक्यताया एव संज्ञायाः परिभाषाणां भाष्यादितो लाभात्पूर्वं फलाभावेनैर्त्सन्नित्यत्राभ्यस्तसंज्ञाया एवाभावेन पञ्चमीसमासानाश्रयणेपि न दोषो ऽत आह । अतएवेति । पञ्चमीसमासाश्रयणा-देवेत्यर्थः । उदकस्पर्शइति । अनुदके इति निषेधसामर्थ्यादत्र क्विपि नेति भावः । तन्निषेधादिति । कौलुप्तमिति पूर्वत्रासिद्धे इति वा तन्निषेधादित्यर्थः । अधिकारइति । एवं चादेशप्रत्यययोरित्येव षत्वं नुमादिव्यवधाने इति भावः । अव्यवधानेपीति । रामेष्वित्यादावित्यर्थः। योग्यतायां त्रिपादीस्थस्याप्रवृत्तेरिति। वाचिकादिव्यवधाने सिद्धयर्थं पूर्वत्रेत्यस्य विषयसप्तमीत्वादिति भावः । वसोः-संप्रसारणम् ॥ वसुरत्र प्रत्यय एव न तु वसु स्तम्भे इति धातुर्विदेः शतुर्वसुरित्यादा-वष्टाध्याय्यां व्यवहृतत्वेन प्रत्ययस्य प्रतिपदोक्तत्वात्तदेतदाह । प्रत्ययग्रहणेइति। नतुलिडादेशक्वसोरिति। उकारोच्चारणसामर्थ्येन तु न निर्वाहः। वसतेरष्टाध्याय्यां वसतिक्षुधोरित्यादौ व्यवहृतत्वेन ग्रहणापत्तेरिति भावः। शीघ्रोपस्थितिकत्वात् पूर्वं संप्रसारणे इति। वस्वेकेतीटस्तु न शीघ्रोपस्थितिकत्वं तस्य नियमार्थत्वेनान्यसंधान-स्यावश्यकत्वेन विलम्बोपस्थितिकत्वात् । वलादित्वाभावादिति । वस्वेकेत्यत्रापि वलादेरित्यनुवर्तत इत्यर्थः । इदम् । वृत्त्युक्तं माधवोक्तं च। असावित्यत्रादिलोपे-कृतेइति। औकारमात्रादेशे कर्त्तव्ये डित्वकरणसामर्थ्येन सर्वतो बलवत्त्वात्पूर्वमेव टिलोपे कृते इत्यर्थः। सत्त्वंबाधित्वेति। अनन्त्ययोरित्यस्य भाष्ये प्रत्याख्यातत्वाट्टि-लोपोत्तरं सत्त्वप्राप्तिरित्यर्थः। तत्सत्त्वे त्वसिद्धिः सुतराम्। न मु ने। मुग्रहणफलं तु न विषयपरं व्याप्तिन्यायाद्यत्किं चित्पूर्वमसिद्धं नेत्यर्थे पय उ च्छन्नममुने त्यादौ छे चेति तुकि उकारस्य न सिद्धत्वं मग्रहणस्याप्येतदेव फलं बोध्यम्। समाहार-द्वन्द्वइति। मकारसाहचर्यादुकारोऽपि मकारविधायक एव गृह्यत इति भावः ॥ इति हलन्ताः पुंलिङ्गाः ॥

नप्रत्ययोर्व्याख्यानादिति। अद्भिः संस्कृतमिति निर्देशादित्यर्थः॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

तत्प्रयुक्तेइति। पदत्वयुक्ते इत्यर्थः । पदत्वेत्यस्य फलं तु बहुपरिव्राजकेत्यादा

असुप इति निषेधस्य प्रत्ययलक्षणेन सिद्धिः । असुप इत्यस्य तु न वैयर्थ्यं बहुपरिव्राजकैः क्रीतेत्यर्थे ठको लुकि टापि बहुपरिव्राजकेत्यादौ चारितार्थ्यात् । उत्तरस्येति निषेधस्य तु न तत्र प्राप्तिः सुचर्मेत्यादौ न लोपादिसिद्ध्यर्थं प्रत्यासत्त्योत्तरप्रकृतिके लुका लुप्ते सुपि प्रत्ययलक्षणं नेति तदर्थादिति भावः । इत्यर्थ-इति । फलितार्थ इत्यर्थः । पर्युदासस्योचित्यात् । अनभिधानमिति । अपदादिविधा इत्येतत्सामर्थ्यादित्यर्थः । अन्यथा तदर्थं सात्पदाद्योरित्यत्र पदादादिरिति पञ्चमीसमासस्यावश्यकत्वेन निरुपपदाद्विचि दध्नः सेचाविति षष्ठीसमासेऽपि षत्वनिषेधस्य सिद्धत्वात्तद्वैयर्थ्यं स्पष्टमेवेति भावः । कैयट इति । अत्रारुचिबीजं तु सुस्रोता दधिसेचक इत्यादीनां गतिकारकघटितानां बहुलक्ष्याणां संग्रहाय वार्तिकप्रत्याख्यानाय दधिसेचावित्यादौ निरुपपदे षष्ठीसमासेपि निषेधाय पञ्चमीसमासस्यावश्यकत्वादनभिधाने न मानमिति । अपदादिविधाविति बहुसेचावित्याद्यर्थे सात्पदाद्योरित्यत्र षष्ठीसमासस्यावश्यकत्वात्तत्पक्षे उपायान्तरपरं बोध्यमिति भावः । विचोऽसार्वत्रिकत्वादाह । सेचयतः क्विबिति । ननु कर्णो वर्णलक्षणादित्यादेर्वर्णलक्षणवाचकात्परस्योत्तरपदसंज्ञकस्यादिरुदात्त इत्यर्थादुत्तरपदादिरिति शब्दोच्चारणेपि पदादित्येतन्मात्ररूपप्रतिपदोक्तस्याभावाच्छुक्लः कर्ण इत्यादौ वाक्ये स्यान्न तु शुक्लकर्ण इति समासे प्रत्ययलक्षणप्रतिषेधादत आह । उत्तरपदादिरिति । कार्यित्वे एवेति । अपदादिविधाविति पर्युदासादिति भावः । मध्यमपदेति । मध्यमपदं च प्रत्याख्यानैकवाक्यतयोत्तरपदाव्यवहितमेव । तेन पञ्चगवधन इत्यादौ टचा व्यवहितगोशब्दादेः प्रत्ययलक्षणप्रतिषेधात्पदत्वाभावेनावङादिर्नेति भावः । भाष्यप्रामाण्याच्चेति । नलोपवारणायैतज्ज्ञापकपरभाष्यप्रामाण्याच्चेत्यर्थः । भाष्येण । "रुरत्रबाधको भविष्यतीति" भाष्येण । पूर्वमेवबोध्यइति । एवं च तत्र राज्ञेत्यत्रत्येन ग्रन्थेन विरोध इति भावः । वस्तुतस्तु प्रत्ययलोपविधायकशास्त्रैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनात्रत्यग्रन्थ एव युक्त इति बोध्यम् । अनर्थकस्यापिग्रणादिति । इन्हन् इत्यत्रेत्यर्थः । दीर्घइति । सर्वनामस्थानेचेति सूत्रेण तु न सिद्धिः । स्रग्विणावित्यादौ दीर्घवारणायानर्थकस्यापि इनस्तत्र पर्युदासादिति भावः । अत्रेति । बहुवृत्रहाणीत्यत्र णत्वविषये इत्यर्थः । तदुक्तमिति । अत्पूर्वस्येत्यत्रेत्यर्थः । अनेनेति । इदमुपलक्षणमसुपपयद्काम्यतीति काम्यच्सूत्रस्थभाष्यप्रयोगस्यापि । अनन्ययपूर्वपदेइति ।

अव्ययपूर्वपदाभिन्ने सृजि याजि चेत्यर्थः । अतएव । अव्ययपूर्वपदाभिन्नत्वात्षत्वस्य कुत्वापवादत्वाद्वा । एवमुपयट्काम्यतीत्यत्रोपेत्यस्य पृथग्भावात् । यजेरव्ययपूर्व-पदभिन्नत्वे बोध्ये । निपातनादेवेतीति । पक्षद्वये ऽपीत्यर्थः । इदमेवन्याय्यमिति । अपवादत्वपक्षे ऽसृगित्यत्र कुत्वानापत्ते रुधिरे ऽसृक्छब्दस्य रूढत्वेन नञर्थसृजर्थ-योरप्रतीतेश्चेत्यर्थः । अनुवृत्तिसामर्थ्यादिति । अस्य वाक्यभेदेनेत्यनेनान्वयः । चेति । समुच्चये च शब्द इति भावस्तत्फलितमाह । अजन्तस्येति । क्लीबस्येति शेषः । तत्र सर्वनामस्थाने इत्यस्य सुटीति व्याख्यातृमते ऽप्याह । सोर्लुकेति । तत्र तथा व्याख्याने पूर्वत्रोगिदचामित्यत्रोत्तरत्र न पुंसकस्य झलित्यत्रापि तथैवौचि-त्यादिति भावः । स्वमते तु सर्वनामस्थानत्वाभावादित्यपि बोध्यम् । व्यपवर्गाला-भेनेति । एतस्योभयत आश्रयणे ऽन्तादिवद्भावाभावे हेतुत्वं बोध्यम् । चेति । चेन स्थानिभूतादचः पूर्वस्य परस्य वा कार्याभावेनाचः परस्मिन्नित्यस्याप्रवृत्त्येत्यपि बोध्यम् । बाधकाभावेनेति । अत्रार्थाधिकारादेवार्थद्वयलाभे सिद्धे एतयोरिति बाधकबाधनार्थं तेन बैल्वं बिल्वमयमिति सिद्धम् । मयड्वैतयोरिति सूत्रस्थभाष्यं तत्सूत्रस्थमेनयोरिति च प्रमाणमपि बोध्यम् । पुनः प्रसंगविज्ञानपक्षे ऽप्याह । किंचेति । ननु मिदचो ऽन्त्यादित्यस्यान्त्यादचः परो मिद्भवतीति एवार्थो न तु प्रयोगपर्यन्तमत आह । किंचेति । इदं सर्वं बहूर्जि नुम्प्रतिषेध इति वार्तिकमते । तत्प्रत्याख्यानकर्तृभाष्यकारमते तु नित्यत्वादुगिल्लक्षणे पूर्वं नुमि नपुंसकस्येत्यस्य प्राप्तिरेव नेति बोध्यम् ॥ इति हलन्ता नपुंसकलिङ्गाः ॥

भाष्यप्रामाण्यादिति । तत्र हि चिरशब्दस्य ट्युट्युलुसंनियोगेन मान्तत्वं निपात्यत इत्युक्तम् । चिरमित्यस्याव्ययत्वे तत्राव्ययत्वादेव प्रत्ययसिद्धेः सूत्रे चिरग्रहणस्य भाष्यस्य चासङ्गतिः स्पष्टैव । अपो ग्रहणं तु भाष्ये प्रत्याख्यात-मेव । न च चिरशब्दस्य कालाट् ठञ्बाधनार्थं ग्रहणं चिरपरुदिति त्नप्रत्ययेन ठञो बाधादिति तत्त्वम् । ननु प्रतानित्यस्यार्थभेदेन सार्थक्यमत आह । अपदा-न्तत्वाच्चेति । रुत्वादिवदिति । अपदान्तत्वादित्यर्थः । आदिना विसर्गजश्त्वे । ननु शान तेजने इत्यस्य प्रशानित्येव गणे पठ्यते इत्यत आह । कृन्मेजन्तइतीति । भाष्यस्वरसोप्येवमेव । तत्र हि कृदन्तम्मान्तमित्यर्थे प्रतामौ प्रातम इत्यादावति-व्याप्तिमाशङ्क्य यदयं स्वरादिषु प्रशाम् शब्दं पठति तज्ज्ञापयत्याचार्यो न प्रत्य-

प्रलक्षणेन कृदन्तत्वमादायाव्ययत्वं भवतीति समाहितमिति भावः । अप्रामाणिकइति । चादिषु पाठादिति भावः । ननु नञश्चादिषु पाठे अव्यये नञ्कुनिपातानामित्यत्र नञ्ग्रहणं व्यर्थमत आह । अव्ययेइतीति । प्रत्यक्षिइति । नञ्मा-क्रोर्द्योतकत्वेन चादिष्वेव युक्तः पाठ इति भावः । विभक्त्यन्तेति । युवामितीत्यर्थः । एवं चार्थतत्साद्दश्यमेव मुख्यम् । शब्दतस्तु सति संभव इति भावः । अत एव भोसित्यस्य विभाषा भवदिति वार्तिकनिष्पन्नभोरित्यनेन प्रतिरूपकत्वान्निपातत्वमिति भाष्योक्तं संगच्छते । असंभवादिति । स्वरग्रहणसामर्थ्यात्तत्र शब्दतः प्रतिरूपकत्वं गृह्यते । एवं चोपसर्गविभक्त्यन्तयोर्विषये ऽर्थतः स्वरांशे शब्दत इति व्यवस्थेति भावः । एतेनार्थतः प्रति रूपकत्वस्य विभक्त्यन्तांशे स्वीकारेण शब्दतोपि संभवादाह । उसेति । वस्तुतस्तत्संभवे न क्षतिरिति बोध्यम् । अतएव । तदित्यस्य सत्त्वादेव । नैकशेषइति । त्यदादिग्रहणे तु साहचर्यादनव्ययस्यैव ग्रहणमिति भावः । ननु गौणमुख्यन्यायेन च्व्यन्ते स्वरादिनिपातमित्यस्य प्रवृत्तिर्नैव स्यादत आह । स्वरादिनिपातमित्यत्रेति । अनित्यत्वादिति । अव्ययत्वस्य पदकार्यत्वाभावेन प्रकृते ऽसमर्थत्वादिति भावः । अन्यथा । अपदकार्येपि न्यायप्रवृत्तौ । प्रगृह्यत्वमिवेति । पदकार्यप्रगृह्यत्वमिवेत्यर्थः । ननु विहितानां नियम इति पक्षे ऽस्य सूत्रस्योपपत्तिरत आह । किञ्चेति । अत्र । अस्यां शङ्कायाम् । नन्वेवमपि कर्माद्यभावात्कथमव्ययेभ्य एकवचनस्यापि प्राप्तिरत आह । द्वित्वबहुत्वयोरिति । अतएव । अव्ययेभ्यः सर्वविभक्त्येकवचनस्य सत्त्वादेव । नन्वव्ययेभ्योपि प्रथमायाः प्राप्तेरप्राप्तप्रापणाभावो ऽत आह । प्रथमायामपीति । ननु पचतिकल्पमित्यादावनेन सर्वविभक्त्येकवचनापत्तिरत आह । पचतिकल्पमित्यादौत्विति । नन्वव्ययेषु कर्माद्यभावात्कर्मणि द्वितीयेत्यादेरनुपस्थित्या न तत्प्राथम्यमत्रोपयुक्तमत आह । निजामिति । ननु निजां त्रयाणामित्यनेनात्र शास्त्रे बहुवचनलभ्यबहुत्वविषये एतन्न्यायाप्रवृत्तिरित्येव ज्ञाप्यते । तेन प्लुतप्रगृह्या इत्यादौ द्युद्भ्य इत्यादौ च न त्रयाणामेव ग्रहणम् । न च तत्र वृत्करणसामर्थ्यान्न्यायबाधः । वृत्करणेनापि एतदर्थस्यैव ज्ञापनात् । एवं च प्रकृते न दोषोत आह । आद्युदात्तश्चेतिसूत्रेति । चेति । चेनाव्ययादिति सूत्रे प्रत्याहारस्य तृतीयासप्तम्योर्बहुलमिति सूत्रे तृतीयासप्तम्योश्च ग्रहणादित्यपि बोध्यम् । अत्रचेति ।

असीविधायके छन्दसीत्यनुवृत्तौ चेत्यर्थः । इष्टसिद्धिरितीति । कुत्सादिविशेषणस्य न ह्युपाधेरुपाधिर्भवतीति न्यायेनानुप्रयुज्यमानप्रधाने एवान्वयेनाकचो ऽप्राप्तेर्न तदर्थमपि कारयामित्यामन्ते ऽव्ययत्वमुपयुक्तमिति भावः । लवमाचक्षाणो लौरिति । ऋदोरबित्यप्प्रत्ययान्तलवशब्दाण्णिचि क्विप्यल्लोपणिलोपयोर्वा ऊठ्येत्येधत्यूठिति वृद्ध्यसिद्धे लौरित्यर्थः । कृतएजन्तत्वेनेति । एजादेशे कृते पञ्चमीसमासेन स्थानिवत्त्वात्पुनः कृदतिङित्यस्य प्रवृत्त्या कृत्त्वमिति भावः । एतेन । संनिपात-परिभाषया ऽव्ययत्वाभावेन । आदिना ऽव्ययानां भमात्रे टिलोप इत्यस्य, न लोकेत्यस्य च संग्रहः । कृन्मेजन्त इति सूत्रस्थभाष्योक्तकुम्भकारेभ्य इत्यादौ लुको ऽप्राप्तेराह । अङ्गसञ्ज्ञायामिति । नन्वत्राङ्गपदाभावादेतादृशार्थलाभो ऽत आह । आविति । ननू च्चैरावित्यादौ लुग्वारणाय तत्फलमस्तीत्यत आह । उच्चैरौ, उच्चैराभ्यामिति । अशब्दादौविभक्तिः । इदं शब्दादौ । अत्रेत्यर्थः । अतएव । तदनभिधानादेव । तन्नोक्तमिति । अङ्गाक्षेपो विहितविशेषणं चेत्यर्थः । इदं सर्वं प्रत्ययग्रहणं चापञ्चम्या इत्यनेन तदन्तत्वनिषेधे तदादेरित्यस्याप्यनुप-स्थितिमते । वस्तुतस्तदन्तत्वनिषेधेपि तदाद्यन्तांशानुपस्थितौ न मानम् । अत एव हेकतरदित्यादावेङ्ह्रस्वादित्यादिनेति सिद्धान्तिमते ऽव्ययाद्यस्मात्प्रत्ययविधि-स्तदादेः परस्याप्यस्लुपश्च लुगित्यर्थादत्युच्चैसावित्यादौ एतदप्राप्त्योच्चैरावित्यादौ विधानेपि न दोष इत्यलम् । अन्त्येकप्रत्ययइति । देवविशामित्यत्रेत्यर्थः ॥ इत्य-व्ययानि ॥

अजाद्यतष्टाप् । अजादीति लुप्तषष्ठीकं पृथक्पदम् । अत इति च पञ्चम्यन्तं बोध्यम् । अतइतिवर्णग्रहणादिति । उगिद्वर्णग्रहणवर्जमित्युक्तेः समासप्रत्ययवि-धाविति निषेधाप्राप्तेः प्रातिपदिकविशेषणात्तदन्तविधिरिति भावः । अदन्तात्प्राति-पदिकात्स्त्रीत्वे द्योत्ये टाबित्यर्थे सत्याकारान्तवाच्य इति फलति तदाह । अका-रान्तस्य चेति । । तद्वाच्यार्थमतामिति । स्त्रीत्वशब्दाट्टाब्वारणायेदमिति भावः । दारशब्दे ऽतिप्रसङ्गवारणायाह । यत्तद्वाच्यमिति । विशेष्यत्वापत्तिरिति । प्रकृ-तिप्रत्ययौ सहार्थं ब्रूतस्तत्र प्रत्ययार्थप्राधान्यमिति व्युत्पत्तेरित्यर्थः । पचतीत्यादौ तिबादयोपि द्योतका एवेति भावः । ननु स्त्रीत्वस्य विशेष्यत्वासंभवादेव व्युत्प-त्तिबाधः स्यादत आह । वागादिष्विति । अतएव । टाबादीनां द्योतकत्वादेव ।

नन्तु द्योतकविषयेप्युक्तार्थानामिति न्यायप्रवृत्त्या समावेशो दुर्लभो ऽत आह । व्यतीति । समुच्चयस्येति । द्योतकानामित्यर्थः । एतत् । अजादीत्येतत् । षष्ठी-कमिति । लुप्तषष्ठ्यन्तमित्यर्थः । व्याख्यानादेवेति । न तूपसर्जनाधिकारसामर्थ्या-देवेत्यर्थः । सामर्थ्येनेति । अजादीत्यस्य लुप्तषष्ठ्यन्तसामर्थ्येनेत्यर्थः । अत्रेति । अजादिगणे इत्यर्थः । मातृजातिवृत्तित्वादिति । मातृजातेर्वृत्तिरावरणं येषां तेषां भावादित्यर्थः । अतएव । अनुलोमसंकरे मातृजात्यारोपादेव । केचिदिति । अत्रारुचिर्बीजं तु छागीति प्रयोगानापत्तेः । भाष्याद्युक्तत्वाच्चसोऽसाधुरेवेति । वर्जमित्युक्तेरिति । अनुपसर्जनाधिकारेण तदन्तविधेर्ज्ञापितत्वाच्चेत्यपि बोध्यम् । अन्तादिति । अन्तशब्दआदिर्येषां तद्विषयः । तेन पूर्वशब्दसंग्रहः । एवेति । येनविधिरिति तदन्तविधेविषये तु न प्रवर्त्तते स्वङ्यचेत्यनेन बाधादिति भावः । निर्यवमतीत्यादावनदोषइति । ननूगिदन्तादित्यर्थेनापि न दोष इति चेन्न । व्यपदे-शिवद्भावेनेयदिति प्रत्ययस्योगिदन्तत्वस्यापि सत्त्वादिति भावः । विषयोनेतीति । तत्परिभाषाया अन्यतरसंबद्धोच्चारणे एव प्रवृत्तेरिति भावः । एतत्सिद्धयर्थमिति । एतस्यापि सिद्ध्यर्थमित्यर्थः । एवं चावावेत्यपि सिद्धमिति भावः । ननु ङीपो-पवाद इत्यस्य ङीपः परत्वाद्बाधक इत्यर्थोस्तु एवं च न भाष्यविरोधो ऽत आह । अतएवेति । टापो बाधकत्वादेवेत्यर्थः । नन्वेतावतापि सूत्रकारमते कथं सिद्धिरत आह । एवञ्चेति । भाष्यमते रूपस्यसिद्धत्वे चेत्यर्थः । एकपाद्यगित्यस्य सिद्ध-यइति । ऋगनपेक्षत्वेनान्तरङ्गत्वात्स्त्रीसामान्यविवक्षायां ङीबन्तप्रयोगस्यर्ग्वाचक-स्यान्यतरस्यां ग्रहणानुवृत्तिं विनापि सिद्धिरिति भावः । इष्टस्य । उक्तरीत्या सिद्धत्वेनेष्टस्य । ननु पादयतेः क्विपि स्त्रियां संभवो ऽत आह । ऋचिवेति । अत्र तदन्तविधिरिति । अत्र तदन्तस्यैव विधिरित्यर्थः । बलात् । अनुरोधात् । भूतपूर्वपट्त्वाश्रयोनिषेधइति । ङीब्निषेधाय भूतं जातं यत्पट्त्वं स्थानिवद्भावेनै-कदेशविकृतन्यायेन वा नलोपे आश्रयो यस्य स निषेध इत्यर्थः । बहुव्रीहौ वेति वार्तिककारमते आह । वचनसामर्थ्यादिति । वार्तिकप्रत्याख्यानकर्तृमते आह । भाष्येत्विति । ननु गृह्यमाणस्यानो ऽन्नन्तबहुव्रीहावनुपसर्जनत्वासंभवेप्यनेन बहुव्रीह्यन्तादुपधालोपिनः प्रातिपदिकादित्यर्थ इति अतिबहुदामा ब्राह्मणीत्यादा-वनो बहुव्रीहेरिति निषेधवदनेन ङीब्वारणाय बहुव्रीहिविशेषणमेवानुपसर्जना-

दिति स्यादत आह । ध्वनितमिति । एवं चात्र प्रातिपदिकादित्यस्य विशेषण-त्वमेवेति तदन्तविधेरेव प्राप्त्यातिदामेत्यादौ न दोष इति भावः । इत्यनन्तरमिति । एवं च डाबुभाभ्यामित्यत्रत्यमन्यतरस्यां ग्रहणं भाष्यमते स्पष्टार्थमेवेति बोध्यम् । अन्यतरस्यांग्रहणंत्विति । उपधालोपिनो वेत्यत्र वा ग्रहणं त्वित्यर्थः । समुदा-यवादी शङ्कते । नचेति । इत्येवज्ञाप्यतेइति । अपूर्वत्वविधायकवचनकल्पने गौरव-मिति भावः । ननु तवापि कादित्यत्र कशब्दे इत्सञ्ज्ञालोपयोः कशब्दस्य ककारमात्रे लक्षणाया वा स्वीकारे गौरवमत आह । तावतापीति । एवं च तवा-पूर्ववचनकल्पने ऽतिगौरवमिति भावः । इत्वाप्राप्तिरिति । एवं च तव मते न या-सयोरिति ज्ञापकादाप्परकाङ्गावयवाकजवयवककारात्पूर्वस्यात इत्वमिति । मम-त्वाप्परकाङ्गावयवाकजवयवककारघटितकशब्दात्पूर्वस्यात इत्वमिति वचनं कल्प्य-ते । लक्षणाश्रयणं तु तव सूत्रे मम ज्ञाप्यकोटिप्रविष्टमिति भावः । अतएव । लक्ष्ये लक्षणस्य सकृदेव प्रवर्तनादेव । सार्थक्यमिति । एवं च वर्णग्रहणपक्षे नापूर्ववचनकल्पनेति भावः । प्रत्ययस्याभावादिति । समुदायग्रहणपक्षे कारिके-त्यादिसिद्धये ऽर्थवत्परिभाषाबाधाय स्थग्रहणमावश्यकमित्यपि गौरवमिति बोध्यम् । इत्वभूतनिर्देशेनेति । कण्ठव्यापारमात्रेणाकारोच्चारणे कर्तव्ये कण्ठतालूभयव्यापारे-णोच्चारितेत्वभूतनिर्देशेनेत्यर्थः । प्रक्रियागौरवापेक्षया व्यापाराधिक्येनोच्चारणे ऽधिकं गौरवमिति भावः । भाष्यकारइति । "त्यकः प्रतिषेधो न वक्तव्यः, यदयं मृदस्तिक-न्नितीत्वभूतनिर्देशं करोति तज्ज्ञापयत्याचार्यो नैवं जातीयस्येत्वं भवतीति" तैरुक्तम् । तत्र कैयटः । अनेकाचो व्यञ्जनादेः सञ्ज्ञाविषयस्य प्रत्ययस्य नेत्वमित्यर्थ इति । शूद्रविकेत्यत्र निषेधवारणायानेकाच इति कारिकेत्यत्र तद्वारणाय व्यञ्जनादेरिति पुत्रकाम्यिकेत्यत्र तद्वारणाय सञ्ज्ञाविषयस्येतीति तद्भावः । अत्र त्यिकन्निनितिकर्तव्ये इति । प्रक्रियालाघवायेत्यादिः । अत्र यकारोच्चारणायापि तालुव्यापारस्यावश्य-कत्वेन नेकारोच्चारणे तस्याधिक्यमिति भावः । स्थानिवत्त्वंचेति । स्थानिवदादेश इति स्थानिवत्त्वं चेत्यर्थः । अचः परस्मिन्निति तु पञ्चेन्द्र इत्यत्रावश्यकत्वेन लुकि न स्थानिवदित्यनेनापि निषिद्धम् । वार्तिकमते न लुमतेत्युभयोर्निषेधकं भाष्यमते तु प्रत्ययलक्षणसूत्रस्य नियमार्थत्वान्न स्थानिवत्त्वप्राप्तिस्तदाह । अतएवेति । प्रत्ययलक्षणसूत्रस्य विधायकत्वादेवेत्यर्थः । मुख्यवाचीत्रिलिङ्गइति ।

देववाची तु पुंलिङ्ग इति भावः । धात्वन्तयकोरित्यत्र समीपे ऽवयवत्वारोपे अत्रानुपसर्जनाधिकारवैयर्थ्यमित्यर्थः । पूर्वोक्तसमाधाने भाष्यसंमतिमाह । एतदेवेति । अवयवात् । कारशब्दात् । उत्पत्तौ । ङीबुत्पत्तौ । ननु तद्धितार्थेत्युत्तरपदे समासविधानस्य विशेषापेक्षत्वेनापि कौम्भकारेय इत्यस्यैव सिद्धावत्रानुपसर्जनाधिकारो व्यर्थ एवेत्यत आह । येनविधिरितिसूत्रेचेति । ननु सर्वादिसूत्रे भाष्ये ऽनुपसर्जनाधिकारः प्रत्याख्यात एवेत्यत आह । यत्त्विति । नन्वेवमपि वक्ष्यमाणेत्यत्र पाक्षिको दोष एवेत्यत आह । उतऔदिति । ङिच्चपिन्नेति । ब्रूतादेत्यत्रेडभावस्तेनेति भावः । पिच्चङिन्नेति । तेनाब्रवीदित्यत्र गुण इति भावः । नङिदादेशानामिति । लकारो यो ङित्तदादेशानामित्यर्थः । तेन रमायामित्यादौ न दोष इति भावः । सानुबन्धकादेशानामिति । सानुबन्धकस्थानिकादेशानामित्यर्थः । इत्यादिना । आदिनाऽचिनवमित्यादौ दूषणसंग्रहः । गाङादेशस्य ङकारस्तु गाङ्कुटेत्यत्र विशेषणार्थ इति ज्ञापकाभावश्च लिङ्सिचाविति झलादिलिङः कित्त्वं तु सृजिदृशोरित्यमभावायेति न ज्ञापकमुक्ते ऽर्थे इति तत्त्वम् । नन्वेवं गर्हिषीष्टौक्षिष्टेत्यादौ स्थानिवद्भावेन ङित्वाद् गुणो न स्यादिति चेन्न । उश्चेति झलादिलिङः कित्त्वविधानसामर्थ्याद्यदागम इति परिभाषाया अनित्यत्वज्ञापनेन ङित्वस्य सीयुड्विशिष्टे ऽभावेन निषेधाप्रवृत्तेरदोषात् । स्पष्टं चेदमिति । निरनुबन्धकठस्य स्त्रियामसंभवात्सानुबन्धकठस्य ग्रहणमित्यर्थः । पुनरत्रग्रहणमिति । ननु बह्वादिष्वनयोः पाठेन ङीषो विकल्पात्पक्षे वयसीत्यनेन ङीप्सिद्धावत्र तयोर्ग्रहणं व्यर्थमिति चेन्न । पुंयोगविवक्षायामपि पक्षे ङीबर्थं तद्ग्रहणसार्थक्यादिति भावः । नन्वनपत्याधिकाराभावादनपत्याधिकारस्थादित्ययुक्तमत आह । अपत्येति । उपरञ्जकतयेति । प्रत्ययषकारस्य मध्यमस्यासंभवादनुवादकतयेत्यर्थः । तत्साहचर्यात् । तद्विधायकसूत्रोपात्तत्वात् । नेत्त्वमिति । फिनो नित्करणसामर्थ्यात्तदादेशविधायकसूत्रोपात्तानामादेशानामित्सञ्ज्ञेति सामान्यापेक्षज्ञापनादिति भावः । नन्वेतच्छिङ्गादादेशैरित्सञ्ज्ञा न बाध्यते लोपस्तु बाध्यत एवेति दोष एवेत्यत आह । आदीति । आदिना ऋतेरीयङित्यस्य संग्रहः । तत्र हि ङिङ्येव सिद्धे ईयङ्करणं धातुप्रकृतिकप्रत्ययानां नैते आदेशा इति ज्ञापनार्थमिति भावः । नन्वेवं ज्ञापकात्पाणिन्युच्चारितप्रत्ययानां नादेशा इत्येव

स्यादत आह । उणादीनामिति । अन्यथा । आदेशानामुपदेशसंन्नियोगशिष्टकार्यात्पूर्वं प्रवृत्त्यभावे । तद्बाधकत्वमेव । ङीववाधकत्वमेव । नन्वत इत्यस्य चाव्विधायके ऽत इत्यधिकाराच्चाबन्तान्ङीपो ऽप्राप्तेस्तस्य निरवकाशत्वेन बाधाच्चाबन्तात्फो भविष्यतीति सर्वत्र ग्रहणं व्यर्थमेवेत्यत आह । चापितुक्तेइति । प्रामादिकइति । परत्वान्ङीषा बाधादिति भावः । त्रीणिवयांसीति । "पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हती" त्युक्तेरिति भावः । चत्वारिवेति । "आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् । तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसी" त्युक्तेरिति भावः । आदेशत्वमिति । न तु प्रत्ययत्वमित्यर्थः । नन्वनो ऽनर्थकत्वात्कथमन उपधालोपिन इत्यस्य प्राप्तिरत आह । अन्ग्रहणेइति । भैषजशब्दोपितत्रेति । औषधे इत्यर्थः । सपूर्वायाः । प्रत्ययस्थाद्यकपूर्वाया इत्यादौ पूर्वशब्दस्य पूर्ववृत्तिवाचिनोऽपि दर्शनादाह । अवयववाचीति । व्याख्यानादिति । पूर्वशब्दस्य प्रथमावयवे रूढेर्भाष्ये कथं तुषजकस्य पत्नीति व्यस्ते प्रश्नात् । अतएव । पूर्वोभ्यासः शपूर्वा इत्यादाववयववाचित्वं तस्य सपूर्वाया इत्यादौ त्वसंभवात्पूर्ववृत्तिवाचित्वं पूर्वशब्दस्येति भावः । ननु व्यपदेशिवद्भावेन संभवो ऽत आह । अव्यभिचाराच्चेति । एवं चात्रस्थपूर्वग्रहणसामर्थ्याद् व्यपदेशिवद्भावाप्रवृत्तिरिति भावः । प्रौढ्येति । अनुपसर्जनाधिकारेणाचारक्विबन्तप्रकृतिककर्तृक्विपो ऽनभिधानादिति भावः । ननु तज्ज्ञापकात्स्त्रीप्रत्ययप्रवृत्तियोग्यानां तादृशानामनभिधानेपि अस्याभिधाने न बाधकमत आह । दृढतरमानाभावादिति । तादृशविशेषापेक्षत्वे मानाभावादित्यर्थः । अत एव भाष्ये तुषजकस्य पत्नीत्यत्रोपचारमात्रमुक्तन्नत्वेतदिति भावः । ननु प्रातिपदिकादित्यनुवृत्तस्य षष्ठ्यन्ततया विपरिणामेन पतिशब्दस्य तद्विशेषत्वात्तदन्तविधावप्यनुपसर्जनादिति गृह्यमाणपतिशब्दविशेषणमेव स्यादिति दृढपत्नीत्यादौ नादेशो न स्यादिति सपूर्वस्येति किमिति प्रश्नो ऽनुपपन्नो ऽत आह । अवयववाचीति । प्रश्नइति । सपूर्वाया इत्यादाविव पूर्ववृत्तिवाच्येवास्त्विति भावः । गवांपतिरितीति । विद्यमानपूर्वप्रवृत्तिकपतिशब्दान्तप्रातिपदिकस्यानुपसर्जनस्य नादेश इत्यर्थे ऽत्रापि गवामित्यस्य पूर्वस्य सत्त्वात्पतिशब्दस्य व्यपदेशिवद्भावेन पतिशब्दान्तप्रातिपदिकत्वाच्च नादेशप्रसङ्गः स्यादिति भावः । तेनचेति । निपा-

नेन चेत्यर्थः। ननु नित्यं सपत्न्यादिष्वित्येवार्द्धमात्रालाघवेन सिद्धे नकारङीब्विशिष्टोच्चारणं व्यर्थमत आह। किञ्चेति। अतएव। विशिष्टोच्चारणेन रूढ्यर्थकस्यैव नादेशविधानादेव। सपतिरित्येवेति। विशिष्टोच्चारणेन रूढिविशेषे एव सपत्नीशब्दस्य साधुत्वबोधनात्पूर्वसूत्रेणाप्राप्तस्तत्र नादेशो नेति भावः। नतथाप्रयोगईष्यतइति। विशिष्टोच्चारणेन रूढिविशेषे एव सपत्नीशब्दस्य साधुत्वाद् व्याख्यानादिति भावः। सौत्रइति। एवं च तथा पाठो न युक्त इति भावः। बोध्यमिति। इदम्। असंभवे एवापवादत्वमिति वार्तिकमते। सत्यपि संभवे बाधकत्वमिति भाष्यमते तु ङीब्नकारयोरत्राप्यनुवृत्तिर्बोध्या। संनिधानाद्व्याख्यानाच्चेति। अभेदान्वयः। चो हेतौ उत्तरार्थमिति। सौरीति। ङ्यन्ताच्छे सौरीय इत्यादौ रेफलोपाभावार्थं तु नाणो लोपस्य स्थानिवत्त्वेन रेफस्योपधात्वाभावादिति भावः। ङ्यामितिनिर्देशादिति। अन्यथा मात्रालाघवेन ङाविति वदेदिति भावः। नक्षत्रेति। नक्षत्रग्रहणफलं तिष्यपुष्यशब्दाभ्यां माणववाचकाभ्यां भवार्थे ऽणि तैष्यः पौष्य इत्येवेत्यवधेयम्। नीलेत्येवेति। लाक्षणिकत्वादस्य न ङीविति भावः। नरूपादीनां ग्रहणमिति। एतेन विस्पष्टरूपमित्यादौ विस्पष्टादीनि गुणवचनेष्विति पूर्वपदप्रकृतिस्वरो नेति भावः। ननु जातिवाचकत्वादेव रूपादीनां व्यावृत्तिरत आह। जातिशब्देनेति। एवंतत्रग्रहणादिति। गुणवचनपर्युदासे इत्यर्थः। तेन शुक्लादीनां गुणवचनशब्देन ग्रहणाच्छुक्लत्वमित्यादौ त्वतलोरिति पुंवत्वं, विस्पष्टशुक्ल इत्यादौ पूर्वपदप्रकृतिस्वरश्च भवतीति भावः। नन्वेवं कठादिशब्दानां गुणवचनसंज्ञा स्यादेवं च कठीत्वमित्यादौ पुंवत्वाद्यापत्तिरत आह। कठादीति। बहुविशेषणानांवैयर्थ्यादिति। सत्त्वे निविशते ऽपैतीत्यनेन पृथग्जातिषु दृश्यत इत्यनेन वा जातेर्वारणे सिद्धे उभयोरपि वैयर्थ्यमपि च गुणजातिमत्त्वमित्येव सिद्धे इतरत्सर्वं व्यर्थं चेत्यलम्। ननु यावदपेक्षितं तावदेवास्तु इतरस्य सर्वस्य प्रपञ्चार्थत्वात्संख्यागुणवचनत्वमिष्टमेवेत्यत आह। भाष्यकृतेति। अभिमानइति। सर्वतो ऽक्तिन्नर्थादित्यस्य प्राप्तेरिदं प्रत्युदाहरणं न युक्तमिति भावस्तदाह। शुक्लेति। नन्वत्र संयोगोपधत्वादेव ङीपभावो ऽत आह। आदीति। आदिना श्वेतादिसंग्रहः। ङीविति। टयुटयुलन्तत्वात्प्राप्त इत्यादिः। पुंस्येवेति। न तु स्त्रियामित्यर्थः। प्रसिद्धइति। वाचकत्वेन स्थित इत्यर्थः।

केचिदिति । भाष्यतत्त्वविद इत्यर्थः । ननु तादृशस्य पालकशब्दस्यानर्थक्यमत आह । वस्तुतइति । अत्रत्यभाष्यादिति । गोपालिक इत्युदाहरणपरभाष्यादित्यर्थः । उपपदमतिङिति सूत्रभाष्याच्चेति । तत्र हि कुम्भकार इत्यत्र षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेत्युक्तम् । नन्वेतद्भाष्येण यथाकथं चित्कारकग्रहणे परिभाषाप्रवृत्तावपि यथाकथंचित्प्रवृत्तिमादाय प्रवृत्तौ न मानं, कच्छे पिवतीत्यर्थकस्य कच्छस्य पिवतीति कच्छपीत्यस्य अधिकरणस्य शेषत्वाविवक्षयोपपदोदाहरणत्वपरभाष्यविरोधश्चेत्यत आह । यद्वेति । अनित्यत्वादिति । गोपालिकेति प्रकृतसूत्रस्थभाष्याज्जनिकर्तुरिति निर्देशाच्चेत्यर्थः । तद्योगएवेति । महत्वदोषशिल्पियोगे एव लक्षणया तत्तद्वाचकत्वे एवेत्यर्थः । एषाम् । हिमारण्ययवयवनानाम् । बहवइति । लक्षणया यवनसंवन्धिलिप्यर्थकाद्यवनशब्दात्स्त्रीत्वे ङीबित्यन्ये । हिमारण्ययवेभ्यस्तु महत्वदोषविशिष्टार्थकेभ्यः स्त्रीत्वे द्योत्ये ङीबिति विशेषः । नियमार्थमिति । पूर्वपदात्परस्य यदि षत्वं तर्हि गवादिभ्यः परस्यैवेति नियमार्थमित्यर्थः । विशेषइति । विशेषश्च तत्रैव दर्शितः । पाणिगृहीतीति भार्यायां चेत् । यस्याश्च यथाकथञ्चित्पाणिर्गृहीतः पाणिगृहीता सा भवतीति प्रयोगात् । आदिना करगृहीतीत्यादिसंग्रहः । नत्वावश्यकेति । णिनिनापि पुत्रादिनीत्यस्य सिद्धिरत आह । आकृतीति । स्पष्टार्थमिति । अनिष्टवारणरूपस्स्पष्टार्थो यस्य तदित्यर्थः । किं तदनिष्टमिति शङ्कते । किंचेति । उत्तरमाह । तदभावेइति । स्वाङ्गात् । ननूत्तरत्रौष्ठादेःसंयोगोपधे नियमार्थत्वादत्रासंयोगोपधादिति व्यर्थमिति चेन्न । संयोगोपधविषयकनियमस्यापि संभवेन सुगिन्द्वत्यादावतिव्याप्तेः सुमुखीत्यादावव्याप्तेश्च । तदन्तादितीति । एतदन्तादेवेतीत्यर्थः । उपसर्जनेति । कृत्रिमोपसर्जनेत्यर्थः । इदमेवेति । इदमस्वाङ्गपूर्वपदादित्यस्य प्रसज्यप्रतिषेधपक्षे पर्युदासे तु सुभुजेति प्रत्युदाहरणं बोध्यम् । तत्र हि भुजेर्घञर्थे के सुशब्देन गतिसमासे इति भावः । एतेन । भाष्यविरोधेन । तेन तु तेनावयवेन तत्प्राणिरूपं वस्तु तथा यथा प्रसिद्धं युतं चेत्तदेव स्वाङ्गं न तु वैपरीत्येन योगे तेन सृष्टकरायां गवि सुकरीति प्रयोगो नेत्येवं नियमार्थमेवेदं किं नेत्यत आह । अतएवेति । अप्राण्यवयवे एतस्य स्वाङ्गत्वविधायकत्वादेवेत्यर्थः । एवं च गवि सुकरीतीष्यत एवेति भावः । भाष्ये तस्येत्यनेन तज्जातीयवस्तुनो ग्रहणं साहित्यस्य संवन्धत्वेन विवक्षायां तस्येति षष्ठीति बोध्यम् । अत एव भाषाया-

मितीत्यस्य भाषायां चेत्येतदर्थकस्यावश्यकत्वादेव । उपदेशादीति । आदिना-वयवदर्शनसंग्रहः । अतएव । समानत्वाभावादेव । अपीति । अपिना कल्पभेदेन दुर्गादिशरीरभेदेपि समानकालिकशरीरभेदेपि शरीरभेदे सर्वशरीरसंस्थानस्यैकत्वे मानाभावेन च जातिवाचकत्वाभावादित्यस्य संग्रहः । अतएव । वयोवाचकस्य जातित्वविकल्पादेत्र सर्वलिङ्गत्वादेव । सर्वलिङ्गत्वाच्चेति । स्त्रीपुंसयोरपत्यान्ता इत्यपत्यविषये स्त्रीपुंसयोरिति नपुंसकस्याप्युपलक्षणम् । अतएवनाडायनमिति नपुंसकं दृश्यत इति भावः । चेति । तेन गोत्रचरणयोर्जातिकार्यस्य नित्यत्वा-यास्य वचनस्यावश्यकत्वादित्यपि बोध्यम् । अतएव । शास्त्रीयगोत्रस्य जातिलक्षणे ग्रहणादेव । नन्ववयवदर्शनेन ग्राह्यत्वे जातित्वं न स्यादत आह । यद्वेति । अपीति । अपिनावयवदर्शनसंग्रहः । अतएव । जातेरसर्वलिङ्गत्वादेव । नियतलिङ्ग-त्वमिति । नियमेनैकलिङ्गत्वंद्विलिङ्गत्वं न तु त्रिलिङ्गत्वमिति भावः । प्राग्वदेव । अप्राप्तप्रापणार्थमेव । अतएव । आकृतिग्रहणेत्यस्य लिङ्गानां च न सर्वभाक् सकृ-दाख्यातनिर्ग्राह्येत्यस्य चैकवाक्यतयार्थाङ्गीकारादेव । भाष्योक्तलक्षणान्तरार्थकैयट आह । सत्त्वस्येति । ताविति । आविर्भावतिरोभावावित्यर्थः । वह्वर्थपदार्थमाह । यावदिति । गुणैरिति । सहार्थेतृतीया । द्रव्येणेति । कर्तरि तृतीया । उपालम्भः । प्रत्य-क्षम् । तदाह । गुणैरित्यादि । अतएव । आकृतिग्रहणेत्यारभ्य निर्ग्राह्येत्यन्तस्यैव लक्षणत्वा-देव । अतएव । लिङ्गानामित्यादेर्जातिस्वरूपानुवादकत्वादेव । अत एव । स्त्रीविषयादि-त्यस्य पूर्वोक्तार्थस्याङ्गीकारादेव । स्त्रीविषयादपीति । सूत्रारम्भसामर्थ्यादिति भावः । ननु सूत्रारम्भसामर्थ्यात्स्त्रीविषयादजातिवाचकान्ङीषित्येव कुतो नेत्यत आह । अजात्यर्थंत्विति । इत्यादिनिषेधादिति । इत्यादिङीष्निषेधादित्यर्थः । ननु पुनर्जातिग्रहणादस्त्रीविषयादित्यस्यैव संबन्धो ऽस्तु तेनावन्तीत्यादेःसिद्धिरत आह। स्त्रीति । पूर्वसूत्रेण । पाककर्णेति सूत्रेण । विच्छिन्नमिति । एवं च तस्य स्वरित-त्वमेव नेति भावः । ननु तित्तिरिः ककुभो लाव इति साहचर्यात्पुंस्त्वेनास्य स्त्रीत्वाभावोत आह । स्त्रीपुंसयोरिति । द्विचतुरिति । द्विपदचतुष्पदषट्पदोरगा-जातिविशेषवाचिन इत्यर्थः । पुनर्जातिग्रहणेनायोपधादिति वदत इत्यस्याप्य-संबन्धादित इति व्यर्थमिति शङ्कते । इतःकिमिति । परकमुनिवृत्त्यर्थमिति । परस्य कपो ऽन्तरङ्गत्वात्प्राप्तस्य निवृत्त्यर्थमित्यर्थः । अतः । पूर्वपरस्योपमानवा-

चित्वाभावेन तत्रोपमानत्वेन प्रतीत्यभावात् । तदारोपेत्र । सहत्वारोपे च । सः । उपमानोपमेयभावः । ननु शार्ङ्गरवादीत्यस्य लुप्तपञ्चम्यन्तत्वे ऽनुपसर्जनादित्यस्य विभक्तिविपरिणामेन षष्ठ्यन्तत्वे च गौरवमत आह । तद्वदत्रेति । तत्र यथाऽण्योकार इति व्याख्यानमेवमत्राप्यन्योकार इत्यजः पञ्चम्यन्तत्वमपि सुवचं तदाह । अन्योऽकारइति । इत्यपीति । व्याख्यानादिति । नृशब्दे ऽलोन्त्यस्येतीको गुणवृद्धी इति परिभाषाभ्यामच एव वृद्धिप्राप्त्या तत्साहचर्यान्नरशब्देऽप्यच एव विधानेन यस्येति लोपेन बाधादाद्याकारस्यैव तत्पर्यवसानादित्यर्थः । अतएव । रूढ्यर्थविशिष्टार्थबोधादेव । तस्यनेष्टमिति । प्राचां ष्फ तद्धित इत्यत्र ष्फडित्येव सिद्धे तद्धितग्रहणं तु ष्फडित्यत्र टित्वस्यापि संभावनया गार्ग्यायणीत्यादौ पक्षे ङीबन्तानुदात्तापत्त्या ष्फडिति वक्तुमशक्यत्वेनासुरायणीत्यत्र यस्येतिलोपार्थमिति भावः । तदनित्यत्वज्ञापनार्थमिति । स्त्रीप्रत्ययप्रकरणे नित्यत्वेन तदप्रवृत्तिज्ञापनार्थमित्यर्थः । तेन डाबन्तदामाशब्देन द्विशब्दस्य बहुव्रीहौ द्विदामेत्यादौ दामहायनान्ताच्चेति ङीब् नेति भावः । अत एव प्राचां ष्फ तद्धित इत्यत्र षित्त्वसामर्थ्यादप्रातिपदिकत्वेपि ङीष्सिद्धेस्तद्धितग्रहणमन्यतोपि ष्फार्थं तेनासुरायणीति सिद्धमिति भाष्योक्तं संगच्छते । अन्यथा लिङ्गविशिष्टपरिभाषयैव सिद्धेस्तदसङ्गतिः । केचिदिति । भाष्यतत्त्वविद इत्यर्थः ॥ इति स्त्रीप्रत्ययाः ॥

ननु घट इत्येतन्मात्रस्यापि प्रयोगात्कथं तत्र क्रियायोग इत्यत आह । ततइति । प्रथमान्तादित्यर्थः । सर्वत्रेति । क्रियान्तरानुपादाने इत्यर्थः । ननु तत्राख्यातार्थकर्त्रादेः क्रियायामन्वयेपि प्रथमान्तस्य घटादेः कथं क्रियायोगो ऽत आह । आख्यातार्थेति । ननु क्रियाजनकस्य क्रियान्वयनियमे प्रथमान्तार्थस्य तत्सत्त्वे न मानमत आह । प्रथमान्तार्थस्यापीति । तत्र मानमाह । व्यवहारइति । सहयुक्ते इति सूत्रे भाष्ये ऽप्रधानग्रहणप्रत्याख्यानायोपपदविभक्तेः कारकविभक्तिर्बलीयसीत्याश्रित्य प्रधानकारकविभक्तेर्बलवत्वात्प्रथमेति व्यवहार इत्यर्थः । नियमोपस्थितिरिति । समभिव्याहृतशब्दानपेक्ष्योपस्थितिरित्यर्थः । तेन हर्यादिशब्दानां नानार्थानां संग्रह इति भावः । ननु सिंहो माणवक इत्यादौ माणवकादिशब्दसमभिव्याहारेणैव सिंहादिशब्दादेः सिंहसदृश इत्याद्यर्थबोधात्तस्य प्रातिपदिकार्थत्वाभावात्तत्र प्रथमा न स्यादत आह । अन्वयेइति । ननु गोपीति

प्रातिपदिके एव लक्षणायाः सत्त्वात्प्रातिपदिकप्रकृतिकङीप्समभिव्याहारेणैव गोपसंबन्धविशिष्टबोधाच्च प्रथमा न स्यादत आह । शक्यतेति । ननु नीलमुत्पलमित्यादौ विशेषणविशेष्यभावस्य परस्परसमभिव्याहारेणैव बोधादुभयत्रापि प्रथमा न स्यादत आह । यद्यपीति । विशेषणविशेष्यभावसंसर्गेणेति । राज्ञःपुरुष इत्यादौ द्विनिष्ठत्वाद्विशेषणविशेष्यभावस्य संसर्गत्वेन दृष्टत्वादत्रापि संसर्गत्वेन व्यवहार इति भावः । नसंसर्गइति । तस्य द्विनिष्ठत्वाभावान्नीलोत्पलमित्यादौ भेदस्य बाधापत्तेः । राहोः शिर इत्यादौ भेदमारोप्य भाष्यकृता षष्ठीसाधनाच्च स न संसर्ग इत्यर्थः । अन्यत्र । मञ्जूषादौ । नन्वेकादिशब्दप्रतिपादितसंख्याया उक्तत्वेऽपि तद्विशिष्टगते संख्यान्तरे प्रथमा भविष्यतीति वचनग्रहणं व्यर्थमत आह । प्रातिपदिकेति । अतएव । आरोपितप्रवृत्तिनिमित्ताश्रयस्यापि ग्रहणादेव । अतएव । अत्र प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणादेव पञ्चकस्यापि प्रातिपदिकार्थत्वादेव । इत्येवार्थइति । न तु पुंसि विद्यमानस्य शस इत्यर्थ इत्यर्थः । नन्वत्र द्विकस्य प्रातिपदिकार्थपदेन संग्रहणे वार्तिकविरोधो ऽत आह । अभिहितेइति । नियमांशानिवेशेइति । नियमांशो विशेषणं यस्मिंस्तस्य नियमोपस्थितिकार्यस्य निवेशो ऽत्र प्रातिपदिकार्थशब्देन स्वीकारे इत्यर्थः । पुमादयइति । आदिना स्त्री नपुंसकमिति । अस्यैवेति । प्रातिपदिकार्थ इत्यस्यैवेत्यर्थः । अन्येसर्वेइति । दारादय इत्यर्थः । दारशब्दस्यापि कुटुम्बत्वसमानाधिकरणभार्यात्वप्रवृत्तिनिमित्ततदश्रयापेक्षया पुंस्त्वस्याधिकस्य सत्त्वान्न प्रातिपदिकार्थत्वात्सिद्धिरिति भावः । अनेकार्थत्वादिति । द्रोणः स्यात्कौरवाचार्यो द्रोणः काक इतीरितः । द्रोणो गिरिविशेषः स्याद्द्रोणः स्याच्चतुराढके इत्यनेकार्थत्वादित्यर्थः । ननु ताद्दशद्वितीयान्तत्वे इष्टापत्तिरित्यत आह । किंचेति । कैयटमतं खण्डयति । नचेति । ननु सिंह इत्यादौ पदे एव लक्षणायाः सत्त्वान्न दोष इति चेत्प्रकृतेपि तुल्यमित्याह । तद्वदिति । नियमांशइति । अत्र सूत्रे नियतोपस्थितिकप्रातिपदिकार्थस्वीकारे इत्यर्थः । ननूक्तार्थानामिति न्यायस्यात्र न प्रवृत्तिः प्रातिपदिकार्थे प्रथमाविधानेन तस्य बाधात् । एवं च वचनग्रहणं व्यर्थमत आह । अन्यथेति । ननु रामावित्यादौ संख्याधिक्ये प्रथमाविधानेन वचनगृहणस्य सार्थक्यादनभिहिताधिकारबाधे न मानमत आह । रामावित्यादा

विति । संख्याधिक्येइति । अस्य प्रातिपदिकार्थापेक्षयेत्यादिः । इत्येवमपीति । अपिना तदाधिक्ये इत्यस्यापि व्यावृत्तौ सिद्धायां मात्रग्रहणसामर्थ्यात्प्रथमया अन्ययोगव्यवच्छेद एव कल्प्यते न तु प्रातिपदिकार्थायोगो व्यवच्छिद्यत इति भावस्तदाह । इदमेव मात्रग्रहणमिति । तत्त्वसंभवादिति । प्रवृत्तिनिवृत्त्योरभिमुखीकरणस्य चासंभवादित्यर्थः । अतएव । अभिमुखीकरणस्य प्रवृत्तिनिवृत्तिरूपफलादेव । एवेति । न तु व्रजानीत्यादिक्रियान्तरे इत्यर्थः । एतदर्थस्य । रामेत्याद्यर्थस्य संबोध्यस्य । अतएव । संबोध्यताघच्छेदकरूपेण संबोध्यस्यानुवाद्यत्वे संबोधनविभक्तेः साधुत्वादेव । ननु संबोध्यस्योद्देश्यविधेयतया विधेयभूतक्रियायामेवान्वये व्रजानि देवदत्तेत्यादेः सिद्धिर्न स्यादत आह । व्रजानीति । ननु तत्र व्रजनस्यानन्वितत्वाद्देवदत्तस्य निघातो न स्यादत आह । तत्रेति । कर्मत्वादुद्देश्यत्वाच्चेति । विधेयभूतज्ञानं प्रतीत्यर्थः । नन्वेकतिङ् वाक्यमित्युक्तेर्व्रजानि देवदत्तेत्यस्यासमानवाक्यत्वं न स्यादत आह । एकतिङिति । अत एव संबोध्यस्य क्रियायामन्वयादेव ॥ इतिप्रथमा ॥

अतएव । क्रियाजनकत्वादेव । एषाम् । कारकाणाम् । सर्वेषाम् । कर्त्रतिरिक्तानाम् । नन्वेवमप्यसंनिहितसंप्रदानस्य क्रियाजनकत्वाभावात्कारकत्वं न स्यादत आह ॥ असंनिहितेति ॥ स्वज्ञानस्येति । संप्रदानविषयकदातृज्ञानस्येत्यर्थः । एवं फलविषककर्तृज्ञानस्य पूर्वकालत्वेन क्रियाजनकत्वम् । नन्वेवमपि कारकस्य कार्याव्यवहित पूर्ववृत्तित्वनियमात्स्तोकमित्यादौ फलस्य घटंकरोतीत्यादौ घटादेश्च स्वव्यापारात्पूर्ववृत्तित्वाभावात्कारकत्वं न स्यादत आह । बौद्धघटादेरिति ॥ कर्तुरी । क्रियापरइति । संबन्धविषयकेच्छाविषय इत्यर्थः । कर्त्राप्तुमिष्यमाणमिति । कर्तृकर्तृकसंबन्धविषयः संबन्धनियतत्वात्संबन्धाश्रयः फलं तदाश्रयः संबन्ध इत्यर्थः । स च किंकरणक इत्याकाङ्क्षायामाह । सचेति । व्यापारेति । फलेन संबन्धमिति । इदमुपलक्षणं फलाश्रयेण संबन्धुमित्यस्यापि । आद्योदाहरणमाह । पयइति । अन्त्योदाहरणमाह । फलस्यापीति । व्यपदेशिवद्भावेनेति । सादृश्यस्य भेदघटितत्वाद्व्यपदेशिन एव व्यपदेशिसदृशभावेनेत्यर्थः । यथाश्रुतं तु न युक्तम् । ससहायेव्यपदेशिवद्भावाप्रवृत्तेः । अत एव व्यापारस्य व्यापाराश्रयत्वेन



कर्तृत्वम् । फलसंबन्धित्वादिति । मध्यमपदलोपित्वात्फलाश्रय संबन्धित्वा दित्यर्थः । अतएव । फलस्य कर्मत्वादेव । *

इतिश्रीमत्पुण्यग्रामस्थ पण्डितवरश्रीमच्छ्रीधरशर्मविरचितशब्देन्दुशेखरव्याख्यायां प्रथमाकारकान्तं समाप्तम् ॥

शुभं भवतु ।

———•———

